# चन्दमामा

सम्पुटः - १७  अगस्ट्- २०००  सञ्चिका - ५



## अन्तरङ्गम्

### कथाः



## एतस्य अङ्कस्य विशेषाः



पक्षसहितः अश्वः (वेतालकथा)



अन्यथाभावः



सुवर्णसिंहासनम्



स्वपरम्परा अभिज्ञायताम् !

Printed and Published by B. Viswanatha Reddi at B.N.K Press Pvt. Ltd., Chennai–600 026 on behalf of Chandamama India Limited, Chandamama Buildings, Vadapalani, Chennai–600 026. Editor: Viswam

THE MOST

YOU CAN
THINK OF
FOR YOUR
NEAR AND DEAR ONES
FAR AWAY

# CHANDAMAMA

GIVE THEM
A
MAGAZINE
IN THE LANGUAGE
OF THEIR CHOICE

ASSAMESE, BENGALI, ENGLISH, GUJARATI, HINDI, KANNADA, MALAYALAM, MARATHI, ORIYA, SANSKRIT, TAMIL AND TELUGU

AND LET THEM ENJOY THE WARMTH
OF THE HOME AWAY FROM HOME

## SUBSCRIPTION

BY AIR MAIL TO ALL COUNTRIES

Twelve issues Rs. 900

BY SURFAÇE MAIL WITHIN INDIA

Twelve issues Rs. 120

Send your remittances
by Demand Draft or Money Order
favouring 'Chandamama India Limited'

to:

PUBLICATION DIVISION
CHANDAMAMA INDIA LIMITED
CHANDAMAMA BUILDINGS
VADAPALANI, CHENNAI–600 026


Editor
VISWAM

Editorial Advisors
RUSKIN BOND
MANOJ DAS

Consultant Editor
K. RAMAKRISHNAN



ALL CORRESPONDENCE TO
Chandamama Magazine Division
Chandamama Buildings
Vadapalani, Chennai–600026
Tel/Fax : 4841778/4842087
e-mail : chandamama@vsnl.com

MUMBAI OFFICE
2/B Naaz Buildings
Lamington Road
Mumbai-400 004
Phone: 022-388 7480
Fax: 022-3889670


**For USA**
**Single copy $2**
**Annual subscription $20**

*Mail remittances to*
**INDIA ABROAD**
**43 West 24th Street**
**New York, NY 10010**
**Tel: (212) 929-1727**
**Fax (212) 627-9503**

*संस्थापकौ –*

**चक्रपाणिः नागिरेड्डी च**

# आत्मावलोकनार्थं प्राप्तोऽस्ति कालः

द्वि सहस्रतमम् एतत् वर्षं शतकस्यास्य अन्तिमं वर्षम् नूतन-शतकस्य आरम्भवर्षं वा इत्यत्र स्यात् विप्रतिपत्तिः, किन्तु एतस्य महत्त्वविषये तु नास्ति सर्वथा विप्रतिपत्तिः ।

त्रिपञ्चाशद्वर्षेभ्यः पूर्वं भारतं स्वतन्त्रं जातम् । ततः किञ्चित्पूर्वं द्वितीयं जागतिकयुद्धं समाप्तम् । तस्य युद्धस्य कारणतः बहवः देशाः महतीं हानिम् अनुभूतवन्तः । उदाहरणत्वेन जपानदेशम् एव पश्याम । तस्य नगरद्वयम् अण्वस्त्रकारणतः उद्ध्वस्तं जातम् । समग्रः देशः भस्ममयः जातः इव । तथापि अद्य स च देशः प्रगतदेशेषु अन्यतमः ! अस्माकं प्रतिवेशिदेशस्य सिङ्गपुरस्यापि एषैव कथा ।

भारतस्य प्रगतौ का बाधा ? अत्र जाताः विज्ञानिनः तन्त्रज्ञानिनः च अपूर्वां सिद्धिं प्रदर्शयन्ति । किन्तु ततः वर्धमानम् अस्ति पाश्चात्यदेशानां सम्पत् । कुतो वा तेषां प्रतिभायाः लाभं वयं स्वीकर्तुं न शक्तवन्तः ?

ते कथयन्ति – 'भारते कार्यकरणे महान् क्लेशः । सर्वकारीया व्यवस्था न उपकरोति न वा सहानुभूत्या व्यवहरति' इति । किम् एषा दशा परिवर्तनीया नास्ति ? देशस्य जनसङ्ख्या दिने दिने वर्धते । प्राकृतिकविकोपस्यापि बाधा वर्धमाना अस्ति । एतादृशस्थितौ अपि यदि वयं जागरणं न प्राप्नुयाम, राष्ट्राभिवृद्धिं न चिन्तयेम तर्हि अस्मान् अधःपतनात् को वा रक्षेत् ?

सर्वकारीयव्यवस्था जनानां हितार्थं आरचिता । जनता एव प्रभुः अत्र । कर्तुम् अकर्तुम् उन्यथाकर्तुं वा अस्ति सामर्थ्यं तस्याः । अतः अस्माभिः अद्य चिन्तनीयम् अस्ति – देशस्य हितार्थं किं कृतं चेत् उचितं स्यात् इति ।



एतस्मिन् अङ्के वयं सर्जनात्मकस्पर्धायाः
नूतनं रूपं परिकल्पयन्तः स्मः ।

# सर्जनात्मिका स्पर्धा

*अधः एकस्याः कथायाः आरम्भः दत्तः अस्ति । उत्तमां कथां रचयितुं अपेक्षितानि उपादानकारणानि सर्वाणि सन्ति तत्र । तानि उपयुज्य कथायाः पूर्णः आकारः परिकल्पनीयः भवद्भिः । कथासमाप्तेः विभिन्नान् प्रकारान् चिन्तयित्वा योग्यां चित्वा लिखन्तु । योग्या शीर्षिका अपि देया । स्मर्तव्यम् अत्र यत् कथाशेषः १५०-२०० शब्दैः एव रचनीयः । चितायै रचनायै पुरस्कारः दास्यते । सा कथा पत्रिकायां प्रकाशयिष्यते च । एतस्यां स्पर्धायां बालाः एव भागं ग्रहीतुम् अर्हन्ति, न ज्येष्ठाः । कथया सह नाम, सङ्केतं, वयः, कक्ष्यां, विद्यालयनाम पत्रालयसङ्ख्यां (पिन् कोड्) च विलिख्य -* ***चन्दमामा (संस्कृतम्) अक्षरम्, ८ उपमार्गः, गिरिनगरम् बेङ्गलूरु - ५६० ०८५*** *इत्येतस्मै सङ्केताय प्रेषयन्तु । कथारचनायां ज्येष्ठेभ्यः वयं न अवराः इत्येतत् बालैः प्रमाणीकरणीयम् अस्ति । अतः कथारचनार्थं ज्येष्ठानां साहाय्यं सर्वथा मास्तु ।*

गङ्गानगरे आसीत् एकं रमणीयम् उद्यानम् । तस्मिन् फलदायिनः वृक्षाः पुष्पदायकाः लता-गुल्मादयः च आसन् । उद्यानपालकः तान् तरुगुल्मलतादीन् पुत्रवत् प्रीत्या पालयति स्म । एतस्मिन् उद्याने कपयः अपि आसन् । ते अन्ये कपयः इव न सामान्याः । ते अपि पुष्पप्रियाः । ते उद्यानपालकेन क्रियमाणं सस्यपोषणं जागरूकतया पश्यन्ति स्म । तेन न सस्यानि उन्मूलयन्ति स्म, न वा पुष्पाणि उत्पाटयन्ति स्म । अतः उद्यानपालकस्य तेषां च मैत्री प्रवृद्धा ।

एकदा उद्यानपालकेन कुत्रापि गन्तव्यम् आसीत् । किन्तु तस्य समस्या - सस्यानां जलसेचनं के कुर्युः इति । सः बहुधा विचिन्त्य एकम् उपायं प्राप्तवान् । तदनुगुणं सः कपीन् निवेदितवान् - "एकं दिनं भवन्तः जलसेचनं कुर्वन्तु" इति । कपयः जलसेचनपात्रं द्रोणीं जानन्ति स्म, जलं कुतः आनेतव्यम् इत्यपि जानन्ति स्म ।

अनन्तरदिने तैः जलसेचनम् आरब्धम् । तेषां नायकः दूरे स्थित्वा सहकारिणां कार्यं परिशीलयन् आसीत् । अत्रान्तरे तेन एकः सन्देहः प्राप्तः - 'किं सर्वाणि सस्यानि अपेक्षितप्रमाणेन जलं प्राप्नुवन्ति ?' इति ।

*एतस्य सन्देहस्य परिहारः तेन कपिनायकेन कथं कृतः ? इत्येतं विषयं कथारूपेण कागदे लिखित्वा अगस्ट्मासस्य ३० दिनाङ्कतः* ***पूर्वं*** *प्रेषयन्तु । पुरस्कृता रचना अक्टोबर्सञ्चिकायां प्रकाशयिष्यते ।*

**- सम्पादकः**

## जुलै - २००० अङ्के प्रकाशितानां प्रश्नानाम् उत्तराणि

१. सरोवरतीरे बकरूपेण स्थितस्य मृत्युदेवतायाः यमस्य प्रश्नस्य युधिष्ठिरेण दत्तम् उत्तरम् एतत् ।

२. क. शकुनिः गान्धारराजः आसीत् ।
  च. महामेरुः केसरिणः निवासस्थानम् ।
  ट. युधिष्ठिरस्य राजसूययागतः पूर्वं सहदेवः माहिष्मतीराजं पराजितवान् आसीत् ।
  त. भरतस्य माता कैकेयी केकयराजस्य पुत्री ।
  प. वाल्मीकेः आश्रमः तमसानदीतीरे आसीत् ।

# वार्ताविशेषः

## वयः न विघ्नायते

छात्राः क्वचित् अध्ययने आसक्तिं न दर्शयन्ति । तादृशानां प्रेरणास्रोतोरूपेण अत्रास्ति कश्चित् राजकिशोरपाण्डेयः नवदेहलीयः । ४४ वर्षीयः सुरक्षादलीयः सः एतस्मिन् वर्षे विद्यावारिधि - (Ph. D) निमित्तं शोधपत्रं प्रस्तुतवान् अस्ति । सः १९८०तमे वर्षे द्वादशकक्ष्याम् उत्तीर्य देहलीम् आगत्य दिनभृतिम् अङ्गीकुर्वन् विश्वविद्यालये उद्योगं प्राप्तवान् । उद्योगं कुर्वन् एव सः स्नातकपदवीं स्नातकोत्तरपदवीं च उत्तीर्णवान् । एतदभ्यन्तरे परिणीतवान् सः चतुर्णाम् अपत्यानां पिता अपि जातः । पिएच्.डि.अध्ययनार्थं यदा तेन प्रार्थितं तदा विश्वविद्यालयीयैः उक्तं यत् वर्षद्वयावधिकः निर्वेतनः विरामः अनुमन्यते इति । वेतनं विना तस्य कुटुम्बपोषणं कथम् ? अतः अन्ते विश्वविद्यालयः तस्मै रात्रिकार्यं प्रादात् । बह्वीः रात्रीः निद्रां विना यापयन् सः शोधप्रबन्धं सज्जीकृतवान् । तस्य शोधप्रबन्धस्य विषयः - 'आध्यात्म - आनन्द-रामायणयोः तुलनात्मकम् अध्ययनम्' इति । रामायणस्य शतविधाः आवृत्तयः लभ्यन्ते इति वदति सः ।



इटलीदेशीया अपरा घटना एतादृशी एव प्रायः । मरिया लुयिसा पियोट्रारियानामिका १०५ वर्षीया वयस्काध्ययनकेन्द्रं प्रविष्टवती गतात् सप्टम्बर्तः । यदा सा अल्पवयस्का आसीत् तदा, तदनन्तरं वा सा विद्यालयं गन्तुं न शक्तवती आसीत् ।

## श्रमनिवारणार्थम् उपायः

बालाः महान्तं स्यूतं पृष्ठभागे आरोप्य विद्यालयं गच्छन्ति इति तु सहजं दृश्यं भारते । सिङ्गपुरे अपि तथैव । तत्रत्याः केचन वाणिज्य-सम्बद्धाः आभियान्त्रिकाः शालस्यूतनिर्मातृ-संस्थया प्रेरिताः सन्तः बालानां स्यूतभारवहन-श्रमस्य न्यूनीकरणे प्रयतमानाः सन्ति । अध्ययनतः ते ज्ञातवन्तः यत् स्यूतवहनतः बालाः पृष्ठवेदनां स्कन्धवेदनां च प्राप्नुवन्ति इति । तैः एतदपि अवगतं यत् बालाः स्यूते पुस्तकैः सह क्रीडनकानि, लेखनीपेटिकां, जलस्यूतम्, अन्यानि वस्तूनि चापि नयन्ति इति । बालानां श्रमस्य निवारणे ते विशिष्टस्यूतरचनां चिन्तितवन्तः सन्ति । तस्य स्यूतस्य वृत्ततन्त्री (Spring) भवति, या च आघातप्रतिरोधिका (Shock absorber) इव व्यवहरति । एतादृशाः विशिष्टाः स्यूताः अग्रिमे वा वर्षे भारतम् आगच्छेयुः इति वयम् आशास्महे ।



## 'बीडी'नामिका धूमवर्तिका निषिद्धा

धूमवर्तिकायां प्राधान्येन द्वैविध्यम् - बीडी, सिगरेट् चेति । बीडी महता प्रमाणेन उत्पाद्यते दक्षिणभारते । मूल्यं तस्याः न्यूनम् । आनन्ददानेन च अन्यूनता । अतः सा सामान्यजनानां प्रिया धूमवर्तिका । विदेशेषु अपि तस्याः जनप्रियता वर्धमाना अस्ति । एषु दिनेषु अमेरिकादेशः तस्य स्वीकारविषये निषेधम् आरोपितवान् । 'बालकर्मकराः तस्याः निर्माणे उपयुज्यन्ते' इत्येषः एव निषेधस्य कारणम् ।' बालकर्मकराः यस्य वस्तुनः निर्माणे उपयुज्यन्ते तानि वस्तूनि वयं न स्वीकुर्मः' इति वदति अमेरिकादेशः । भारते तु बालकर्मकराः स्फोटकनिर्माणे, वलनिर्माणे, कटनिर्माणे च उपयुज्यन्ते । उपाहारमन्दिरेषु बहुषु ते उद्योगिनः भवन्ति । भारवहनकर्मणि अपि उद्युक्ताः दृश्यन्ते ते ।





## 'मूषक'नोदनात् पञ्चतन्त्रं प्राप्यते

मूषकप्रधानाः कथाः पञ्चतन्त्रे बहवः । ताः सर्वाः कथाः कथासरित्सागरीयाः कथाः च इदानीं सङ्गणकयन्त्रस्य मूषक-(Mouse) नामकस्य साधनस्य सकृत् नोदनात् द्रष्टुं शक्याः । एतादृशाः तन्त्रांशाः (Softwere) पुणेविश्वविद्यालयस्य विज्ञानविभागेन सज्जीकृतः अस्ति । तत्र संस्कृतसाहित्यात् उद्धृताः सूक्तयः सुभाषितखण्डाः च मध्ये मध्ये योजिताः सन्ति । एतस्यां योजनायां कानपुरीयाः हैदराबादीयाः च ऐ. ऐ. टि. जनाः, बेङ्गलूरीयाः सि. डाक् जनाः च सहयोगिनः सन्ति ।



# वेताल-कथा

## पक्षसहितः अश्वः

स्वीकृतं कार्यं त्यक्तुं सर्वथा अनिच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनेन श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! भवतः अयं श्रमः व्यर्थः इति कथयन् अहम् एव श्रान्तः, न तु भवान् । महता परिश्रमेण कठिन-कार्यं कृत्वा फलं प्राप्तं चेत् न पर्याप्तम् । फलानुगुणम् स्वस्य योग्यतायाः सम्पादनम् अपि करणीयम् एव । शान्तिपुरे पूर्वं प्रतापः नाम युवकः आसीत् । सः असम्भवतुल्यम् अपि कार्यं साधितवान् । किन्तु



फलानुगुणं तदीयं व्यक्तित्वं न आसीत् इत्यतः तस्य समग्रः श्रमः व्यर्थः जातः । प्रतापस्य कथायाः श्रवणतः भवति विवेकः उत्पद्येत इति विचिन्त्य अहं तदीयां कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

ततः वेतालेन कथा आरब्धा -

शान्तिपुरस्य राजा इन्द्रसेनः । तस्य पुत्री देवदत्ता इति । यदा सा प्राप्तवयस्का जाता तदा राजा मन्त्रिणः आज्ञापितवान् यत् मम पुत्र्याः निमित्तं योग्यः राजकुमारः अन्वेषणीयः इति । तदनुगुणं मन्त्री सर्वत्र दूतान् प्रेषितवान् ।

एषा वार्ता राजकुमार्या देवदत्तया अपि श्रुता । सा पितरम् उक्तवती - ''तात ! आ बाल्यात् मम काचित् इच्छा अस्ति । यः मम ताम् इच्छां पूरयति सः एव परिणेतव्यः इति सङ्कल्पितवती अस्मि'' इति ।

तदा राजा - ''का सा इच्छा भवत्याः ? मां वदतु । तदनुगुणं योग्यं वरम् अहम् अन्विष्यामि'' इति वात्सल्यपूर्वकम् अवदत् ।

''निर्मलायां चन्द्रिकामय्यां रात्रौ पक्षसहितस्य श्वेताश्वस्य उपरि उपविश्य आकाशे सञ्चरणीयम् इति मम इच्छा । यः राजकुमारः, अन्यः वीरः वा तादृशम् अश्वम् आनेष्यति तमेव परिणेष्यामि अहम् । यदि तादृशः कोऽपि न लभ्येत तर्हि अहम् आजीवनं ब्रह्मचारिणी एव भविष्यामि'' इति दृढस्वरेण उक्तवती राजकुमारी ।

पुत्र्याः अपेक्षां श्रुत्वा राजा आश्चर्यचकितः चिन्ताक्रान्तः च । 'पक्षसहिताः अश्वाः सन्ति इति कथादिषु श्रूयते । किन्तु इहप्रपञ्चे तादृशाः अश्वाः सन्ति इत्यत्र न किमपि प्रमाणम् । एवं स्थिते को वा वीरः तादृशम् अश्वम् आनेतुं शक्नुयात् ? सर्वथा असम्भवम् एतत्' इति चिन्तयित्वा राजा पुत्रीम् अवदत् - ''वत्से ! भवत्याः अपेक्षा सर्वथा पूरयितुम् अशक्या । अतः एतां विलक्षणाम् अपेक्षां परित्यजतु भवती'' इति । किन्तु राजकुमारी एतत् न अङ्गीकृतवती ।

अन्ते राजा अनन्यगतिकतया राज्ये सडिण्डिमघोषं वार्तां प्रसारितवान् यत् यः पक्षसहितं श्वेताश्वम् आनेष्यति तस्मै एव राजकुमारी दास्यते इति । बहवः राजकुमाराः एतदर्थं प्रयत्नं कृतवन्तः । किन्तु ते सर्वे असफलाः । एवम् एव वर्षम् अतीतम् ।

तस्मिन् राज्ये प्रतापः नाम सुन्दरः धीरः युवकः आसीत् । तेनापि राजकुमारीविवाह-



वार्ता श्रुता । वर्षम् अतीतं चेदपि केनापि राजकुमारेण श्वेताश्वम् आनेतुं न शक्तम् इति यदा ज्ञातं तदा तस्य मनः स्पर्धाह्वानोपेतं जातम् । तस्य मनसि सदा राजकुमार्याः अपेक्षा एव आवर्तते स्म ।

विंशतिवर्षीयः युवकः प्रतापः मातापितृ-विहीनः । पुष्पविक्रयणं, पुष्पालङ्कारः च तस्य वृत्तिः । विविधैः पुष्पैः रमणीयमालानां निर्माणं, तोरणादीनाम् अलङ्करणं, मन्दिरेषु भगवतः मूर्तेः अलङ्कारः इत्यादिषु कार्येषु तस्य विशेषनैपुण्यम् । सः मन्दिरस्य विग्रहं श्रद्धया अलङ्करोति स्म । अतः अर्चकः तस्मिन् विशेषप्रीतिमान् आसीत् । कदाचित् अर्चकेण सह वार्तालापं कुर्वन् प्रसङ्गवशात् प्रतापः अपृच्छत् - ''अर्चकवर्य ! किं लोके पक्षसहिताः अश्वाः भवितुम् अर्हन्ति ? अथवा ते कथादिषु पुस्तकेषु चैव दृश्यन्ते ?'' इति ।

तदा अर्चकः हसन् अवदत् - ''पक्षसहिताः अश्वाः भूलोके कुत्रापि न स्युः । किन्तु ते लोकान्तरे अपि न सन्ति इति तु वक्तुं न शक्यते । यक्षकिन्नरदेवादीनां लोके क्वचित् ते स्युः एव । विन्ध्यपर्वतालौ अनेकानि प्राचीनमन्दिराणि सन्ति । तानि द्रष्टुं गताः केचन उक्तवन्तः यत् तत्रत्यानि सरोवराणि प्रति गन्धर्वकन्यकाः स्नानार्थम् आगच्छन्त्यः भवन्ति इति । कैश्चित् ताः दृष्टाः अपि । गन्धर्वकन्यकाः पक्षसहितम् अश्वं दर्शयितुम् अर्हन्ति प्रायः'' इति ।

अर्चकस्य वचने विश्वासं प्राप्य प्रतापः अनन्तरदिने एव विन्ध्यपर्वतं प्रति प्रस्थित-वान् । अरण्यानि, पर्वतान्, नदीश्च क्रममाणः सः एकस्मिन् सूर्यास्तसमये विन्ध्यपर्वतीयम् एकं रम्यं खातप्रदेशं प्राप्तवान् । ततः अनतिदूरे एकः जलप्रपातः दृश्यते स्म । काश्चन गुहाः अपि दृश्यन्ते स्म । जलप्रपातं परितः उन्नताः वृक्षाः आसन् । तेषां मध्ये विविधाः पुष्पलताः पुष्पसस्यानि च आसन् । तत्रत्यपरिसरस्य अनुपमं सौन्दर्यं दृष्ट्वा प्रतापः नितरां सन्तुष्टः । अस्तं गच्छतः सूर्यस्य शान्तकिरणाः परिसरस्य शोभां द्विगुणी-कृतवन्तः आसन् ।

पुष्पाणां दर्शनतः मालाकारस्य तस्य मनः आनन्दपरिपूर्णं जातम् । सः वृक्षेषु लम्बमानाः लताः संयोज्य एकाम् आन्दोलिकां निर्मित-वान् । ततः तां विविधैः पुष्पैः अलङ्कृतवान् च । तावता सूर्यास्तः जातः । शुक्लपक्षकालः



आसीत् सः । अतः वृक्षपर्णानां मध्यतः आगताः चन्द्रकिरणाः तत्र सर्वत्र प्रसृताः । चन्द्रकिरणानां संस्पर्शतः तस्य परिसरस्य अपूर्वता सिद्धा । तत्र सुन्दरः कश्चन अपरः लोकः एव निर्मितः इव । कस्याश्चित् वृक्ष-शाखायाम् उपविश्य प्रतापः अनुपमदृश्यस्य सौन्दर्यस्य आस्वादनं कुर्वन् स्थितवान् ।

यदा रात्रेः द्वितीयः प्रहरः अतीतः तदा आकाशमार्गेण काश्चन गन्धर्वकन्यकाः आगताः । ताः सर्वाः स्नानार्थं प्रपातं प्रति गतवत्यः, ऋते एकस्याः । या तत्र स्थितवती तस्याः नाम चारुशीला इति । तस्याः दृष्टिः आन्दोलिकायां पतिता । सा तस्याम् उपविश्य दोलनम् आरब्धवती ।

किञ्चित्कालं दोलनक्रियया आनन्दं प्राप्य ततः निर्गन्तुम् उद्युक्तायाः तस्याः दृष्टिः आन्दोलिकारचनायां लग्ना । वृक्षेभ्यः स्वाभाविकतया निर्गता इव दृश्यते स्म सा आन्दोलिका । वृक्षे फलपुष्पादीनां यथा तथा आन्दोलिकायाः उत्पत्तिः असम्भवा इति जानती सा - 'एतां कः कलाकारः निर्मितवान् स्यात् ?' इति चिन्तितवती । तावता मन्दहासं प्रकटयन् कश्चन तरुणः तया अनतिदूरे दृष्टः ।

''कः भवान् ? मानवसञ्चारशून्ये प्रदेशे अर्धरात्रकाले भवतः उपस्थितिः कथम् ?'' इति पृष्टवती चारुशीला ।

''भवत्याः अनुपमसौन्दर्यादिद्वारा अहं तर्कयामि यत् भवती गन्धर्वकन्या स्यात् इति । अहं तु कश्चन मनुष्यः । प्रयोजनविशेषं मनसि निधाय अत्र उपस्थितः अस्मि । यदि भवती गन्धर्वकन्या एव, तर्हि अहं भवत्याः साहाय्यम् इच्छामि । अहं मालाकारवृत्त्या जीवामि । भवतीनाम् सन्तोषाय लतापुष्पादिसाहाय्येन मया एषा आन्दोलिका कल्पिता'' इति अवदत् प्रतापः विनयेन ।

''एतादृशीम् आन्दोलिकां निर्मितवतः भवतः कलानैपुण्यं नितराम् अपूर्वम् । अभि-नन्दनार्हः भवान् । किं साहाय्यम् अपेक्ष्यते ? यदि अहं तत् कर्तुं शक्नुयां तर्हि सन्तुष्टा भवेयम्'' इति उक्तवती चारुशीला ।

प्रतापः स्वस्य आगमनस्य उद्देशं विस्तरेण निवेदितवान् । तत् श्रुत्वा गन्धर्वकन्या - ''अस्माकं गन्धर्वलोके पक्षसहिताः श्वेताश्वाः सन्ति इति तु सत्यम् । अहं तेषां स्थानं प्रति भवन्तं नेतुं शक्नुयाम् । किन्तु ततः तेषां नयनविषये उपायः भवता एव चिन्तनीयः''

इति उक्त्वा प्रतापं पुष्पहाररूपेण परिवर्त्य कण्ठे धृत्वा गन्धर्वलोकं प्राप्य श्वेताश्वस्थानं गतवती । प्रतापं मानवं विधाय ततः निर्गतवती सा ।

प्रतापः तत्रत्यम् एकम् अश्वं पुष्पैः पर्णैः च अलङ्कृतवान् । स्वशरीरे स्थितैः पुष्पैः मालां रचयित्वा तस्य कण्ठे स्थापितवान् च । एतेन अश्वस्य सौन्दर्यं द्विगुणितं जातम् ।

तदा अश्वः अवदत् -''पश्यतु, मङ्गल-वाद्यानां रवः श्रूयते । अल्पे एव काले गन्धर्वराजः स्वर्णगम्भीरः स्वस्य जन्मोत्सवाचरणस्य निमित्तं वाहनरूपेण अश्वं चेतुम् अत्र आगमिष्यति । यदि सः माम् एव तदर्थं चिनुयात् तर्हि अहं भवतः इच्छां पूरयिष्यामि । भवता कृतस्य अलङ्कारस्य कारणतः मम शोभा वर्धिता अस्ति । राजा यदा अत्र उपस्थितः भवति तदा भवान् अत्र कस्यापि दृष्टिगोचरः न भवेत् । अहं रात्रौ पुनः भवन्तं द्रक्ष्यामि'' इति ।

गन्धर्वराजः तस्य अश्वस्य सौन्दर्येण वशीकृतः अभवत् । अतः सः तम् एव वाहनत्वेन चितवान् । तम् अर्चयित्वा सः तदपरि उपविष्टवान् । राजानं प्रासादं प्रापय्य प्रत्यागतः अश्वः प्रतापसमीपम् आगत्य अवदत् - ''हे मानवयुवकोत्तम ! भवता कृतस्य अलङ्कारस्य कारणतः एव अद्य अहं महाराजस्य कृपादृष्टिपात्रं जातः । अतः अहं नितरां कृतज्ञः अस्मि । वदतु भवतः का अपेक्षा पूरणीया मया ?'' इति ।

प्रतापः स्वस्य आगमनस्य उद्देशं निवेदितवान् । प्रातापस्य वचनं श्रुत्वा अश्वः अवदत्



- ''भवान् सुन्दरः युवकः कलाकारश्च । स्वस्य गुणवैशिष्ट्यानां कारणतः एव भवान् एतं गन्धर्वलोकं प्राप्तवान् अपि । तथापि 'राजकुमारीं परिणेष्यामि' इत्येषः भवतः सङ्कल्पः न युक्तः । राजधर्मः कठोरः । कला तु पुष्पकोमला । राजकुमारी परिणीता चेत् भवतः कलाकारता क्षतिग्रस्ता भविष्यति । एवं स्थिते अपि दत्तस्य वचनस्य पालनं तु अहं करिष्यामि । मम पृष्ठे उपविशतु तावत् । भवन्तं राजकुमारीसमीपं नेष्यामि'' इति ।

प्रतापः अश्वस्य उपरि उपविष्टवान् । किञ्चित्कालं प्रयाणं कृत्वा अश्वः शान्तिपुरस्य राजोद्याने अवतीर्णः ।

राजकुमारी कौमुदीमय्यां रात्रौ उद्याने उपविश्य प्राकृतिकसौन्दर्यस्य आस्वादनं

कुर्वती आसीत् । अत्रान्तरे तस्याः पुरतः पक्षसहितः श्वेताश्वः उपस्थितः जातः । तदुपरि उपविष्टः सुन्दरः युवकः अपि तया दृष्टः ।

अश्वात् अवतीर्य प्रतापः राजकुमारी-समीपम् आगत्य अवदत् - ''राजकुमारि ! आ बाल्यात् यं प्राप्तुं भवती तीव्राम् इच्छां कृतवती, यं च भवती स्वप्ने बहुवारं दृष्टवती, सोऽयं श्वेताश्वः उपस्थितः अस्ति । एतस्य उपरि उपविश्य भवती चन्द्रिकामय्यां रात्रौ आकाशे विहारं कर्तुम् अर्हति'' इति ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! प्रतापः यस्य लक्ष्यस्य पूर्त्यै साहसं श्रमं च कृतवान् तत् यदा सिद्धप्रायम् आसीत् तदा सः प्रयत्नं परित्यक्तवान् । किं सः विवेकहीनः न ? सः किमर्थं प्रयत्नं परित्यक्तवान् ? राजकुमारी किमर्थं तेन न परिणीता ? एतेषां मम प्रश्नानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''प्रतापः कदापि राजकुमार्याः परिणये आसक्तिमान् न आसीत् । सः साहसी आसीत्, न तु महत्त्वाकाङ्क्षी । राजकुमारी परिणेतव्या इति उद्देशेन सः सपक्षस्य अश्वस्य अन्वेषणार्थं न उद्युक्तः, प्रत्युत यत् केनापि युवकेन साधयितुं न शक्तं तत् साधनीयम् इति उद्देशेन प्रवृत्तः । सर्वे राजकुमाराः यदा असमर्थाः जाताः तदा सः कार्यप्रवृत्तः जातः । प्रतापः साहसी सन् अपि न कठोरहृदयः । राजकुमारीं परिणीता चेत् अलङ्करणादिकला परित्यक्तव्या भवति इति सः जानाति स्म । कलायाम् एव तस्य विशेषासक्तिः आसीत् । यः कलाकारः भवति सः राजभवने सुखेन स्थातुं न अर्हति इति सः सम्यक् जानाति स्म । अतः एव सः निर्णीतवान् यत् अहं राजकुमारीं न परिणेष्यामि, यथापूर्वं सामान्य-जीवनं यापयिष्यामि इति । यदा अश्वेन अपि स्मारितं तदा तु तस्य निर्णयः दृढतरः जातः । राजकुमार्यै पक्षसहितं श्वेताश्वम् आनीय दत्त्वा अपि तस्याः परिणये अनिच्छां प्रकटितवान् सः श्रेष्ठताम् एव प्रदर्शितवान्'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।





# राक्षसस्य रोगः

रघुनन्दनः कश्चन वैद्यः । तस्य गृहं यस्मिन् ग्रामे आसीत् ततः अनतिदूरे एकं घोरम् अरण्यम् आसीत् । तस्य औषधानि रामबाणायन्ते स्म । अतः तस्य गृहं सर्वदा चिकित्सापेक्षिभिः पूर्णं भवति स्म । रघुनन्दनः रोगिभ्यः शुल्कं त स्वीकरोति स्म । तथापि रोगोपशमनं प्राप्तवन्तः बहवः स्वशक्त्यनुसारं धनधान्यादिकं समर्पयन्ति स्म । एतेन एव तदीयं जीवनं प्रचलति स्म ।

तस्य पत्न्यै भानुमत्यै एषः व्यवहारः सर्वथा न रोचते स्म । 'वैद्यः प्रभूतं धनं सम्पादयति । अतः मम पतिगृहं सम्पद्भरितम् एव भविष्यति । पतिगृहे स्वर्णाभरणानि बहूनि भविष्यन्ति । कौशेयशाटिकाः एव प्रतिदिनं धरेयम्' इति तस्याः स्वप्नः आसीत् । किन्तु अत्र भोजनद्वयस्य अपि अभावः !

एकदा मध्यरात्रसमये द्वारताडनशब्दः श्रुतः । रघुनन्दनस्य तत्पत्न्याः च जागरणं जातम् । ''एतस्मिन् गृहे रात्रौ निश्चिन्ततया निद्रां कर्तुम् अपि अवकाशः नास्ति । हा हन्त ! अत्र आगच्छतां रोगिणां समयासमय-विवेकः एव सर्वथा नास्ति'' इति स्वगतं वदन्ती भानुमती उत्थाय गत्वा द्वारम् उद्घाटितवती । वैद्यः ताम् अनुसृत्य गतवान् । द्वारम् उद्घाटितवती भानुमती भीत्या चीत्कुर्वती अन्तः आगतवती । यतः द्वारस्य पुरतः कश्चन घोरराक्षसः स्थितः आसीत् ।

''अलं भीत्या । समीपस्थे अरण्ये निवसन् राक्षसः अहम् । चिकित्सार्थं मया आगतम् । केभ्यश्चित् दिनेभ्यः महती श्रान्तिः मां बाधते । भवतः नाम श्रुत्वा अहम् अत्र आगतः'' इति रघुनन्दनम् उक्त्वा हस्ताभ्यां शिरः गृहीत्वा उपविष्टवान् राक्षसः ।

'अस्मान् खादितुम् अयं न आगतः । प्रत्युत चिकित्सार्थम् आगतः' इति चिन्तयतोः तयोः दम्पत्योः भीतिः अपगता ।



"किं कष्टं भवतः ?" इति अपृच्छत् रघुनन्दनः ।

राक्षसः दीर्घं निश्श्वस्य अवदत् - "सर्वदा पिपासा बाधते । हस्तयोः पादयोः च सन्धिषु वेदना । श्रान्तिः तावत् भवति यत् किञ्चित् सञ्चारः कृतः चेदपि अहं श्रान्तः भवामि । श्रान्तिकारणतः प्राणाः गच्छेयुः वा इत्यपि भीतिः भवति" इति ।

वैद्यः तस्य नाडीपरीक्षां कृत्वा अवदत् - "आगमने विलम्बः कृतः भवता । रोगः प्रवृद्धः दृश्यते । प्राणघातकः असुरमेहः अयम् । तथापि अलं चिन्तया । मासं यावत् मया दत्तम् औषधं सेवितं चेत् भवान् पूर्णतः स्वस्थः भविष्यति" इति ।

वैद्येन यत् औषधं सकृत् दत्तं तस्य सेवनात् एव राक्षसः उत्साहं प्राप्तवान् इव । सः कृतज्ञतापूर्वकम् अवदत् - "श्वः एतस्मिन् एव समये आगमिष्यामि" इति ।

राक्षसस्य निर्गमनस्य अनन्तरं कोपेन द्वारं पिधाय पतिं निन्दन्ती भानुमती उक्तवती - "मानवेभ्यः तु भवता शुल्कं न स्वीक्रियते । राक्षसात् वा कुतः शुल्कं न स्वीकरणीयम् ? राक्षसस्य उपकारतः को वा लाभः भवतः ? स तु मानवानां शत्रुः" इति ।

तदा रघुनन्दनः शान्तेन एव स्वरेण - "भोः, अहं मम वृत्तिं वाणिज्यीकर्तुं न इच्छामि । यद्यपि मया औषधं दीयते, तथापि स्वास्थ्यलाभः तु भगवतः अनुग्रहेण भवति । स्वास्थ्यं प्राप्तवन्तः यत् अर्पयन्ति ततः तृप्तिः प्राप्तव्या अस्माभिः । अत्याशा न श्रेयसे । औषधस्वीकर्ता कः इति परीक्ष्य अहम् औषधं न ददामि । औषदानमात्रं मम कर्तव्यम् । तत् अहं श्रद्धया पालयामि" इति ।

पत्युः उपदेशः भानुमत्याः प्रियः न जातः । सा निश्चितवती यत् श्वः राक्षसः यदा आगमिष्यति तदा शुल्कविषयप्रस्तावम् अवश्यं करिष्यामि इति ।

अनन्तरदिने राक्षसः औषधं सेवित्वा यदा निर्गन्तुम् उद्युक्तः तदा भानुमती उक्तवती - "राक्षसार्य ! भवतः चिकित्सार्थम् एतावता एव मम आर्यपुत्रेण शतं रूप्यकाणि व्ययितानि । अतः श्वः अपि भवान् रिक्तहस्तः सन् मा आगच्छतु कृपया" इति ।

एतत् श्रुत्वा राक्षसः नितरां कुपितः । "किं मत्तः धनम् अपेक्षते भवती ? कियत् धाष्टर्यं भवत्याः ! धनव्यामोहवतां विषये

महान् कोपः मम । अतः अहम् अरण्ये धनवतः जनान् एव गृहीत्वा धनं वशीकृत्य खादिष्यामि'' इति कोपेन अवदत् सः ।

राक्षसस्य वचनस्य श्रवणात् भानुमती नितरां भीता । अतः सा मौनम् आश्रितवती । किन्तु एतस्मात् सम्भाषणात् तया ज्ञातं यत् राक्षसस्य आवासस्थाने प्रभूतम् ऐश्वर्यम् अस्ति इति । 'तस्य वासस्थानं ज्ञायेत चेत् मया प्रभूतानि आभरणानि प्राप्येरन्' इति चिन्तयित्वा सा राक्षसस्य वासस्थानस्य अन्वेषणार्थम् एकम् उपायं कृतवती ।

एकदा सायङ्काले सा - 'अहं मातृगृहं गच्छामि' इति पतिम् उक्त्वा गृहात् निर्गतवती । ततः ग्रामात् बहिः गुल्मानां पृष्ठतः स्थितवती । मध्यरात्रे राक्षसः वैद्यं दृष्ट्वा यदा प्रतिप्रस्थितवान् तदा सा तं रहसि अनुसृतवती । एतेन तया राक्षसस्य गुहा ज्ञाता । रात्रौ गुहासमीपे एव स्थितवती सा । अनन्तरदिने राक्षसस्य निर्गमनपर्यन्तम् अपि सा तत्रैव स्थितवती । धनपिशाचग्रस्तां तां बुभुक्षा-पिपासा-निद्रा-श्रान्त्यादयः न अबाधन्त ।

अनन्तरदिने मध्यरात्रसमये गुहतः राक्षसस्य निर्गमनस्य अनन्तरं सा गुहां प्रविष्टवती । गुहायाः एकस्मिन् कोणे चर्मस्यूतद्वयम् आसीत् । एकस्मिन् आभरणानि, अपरस्मिन् सुवर्णनाणकानि च आसन् । तानि दृष्ट्वा महान्तं सन्तोषं प्राप्तवती सा ।

तत् स्यूतद्वयम् अपि स्कन्धे आरोप्य अन्यमार्गेण प्रस्थाय उषःकालसमये सा गृहं प्राप्तवती । तत्समये रघुनन्दनः स्नानगृहे आसीत् । एषा विना शब्दं प्रविश्य गृहस्य



पृष्ठभागे तत् स्यूतद्वयं स्थापितवती । अतः रघुनन्दनः तया कृतं किमपि न ज्ञातवान् एव ।

अल्पे एव काले तया पादयोः, समग्रे शरीरे च महती वेदना प्राप्ता । श्रान्तिकारणतः, आहाराभावतः, स्यूतवहनतः च एवं जातं स्यात् इति चिन्तितवती सा शय्यायां सुप्तवती । क्रमेण तस्याः वेदना प्रवृद्धा । वेदनासूचकः ध्वनिः तस्याः मुखतः निरन्तरं निर्गतः । तं ध्वनिं श्रुत्वा रघुनन्दनः पत्न्याः समीपम् आगतवान् । तां परीक्ष्य काञ्चन गुलिकाः तस्यै दत्तवान् सः ।

तस्मिन् दिने मध्यरात्रसमये राक्षसः महता उत्साहेन रघुनन्दनसमीपम् आगतवान् । सः आनन्देन - ''वैद्यमहाशय ! भवतः औषधं रामबाणायते । अद्य अहं पूर्णरूपेण स्वस्थः

अस्मि । अहं भवते उपायनरूपेण सुवर्णनाणकानि स्वर्णाभरणानि च दातुम् इच्छामि स्म । किन्तु दौर्भाग्यवशात् केनचित् तानि लुण्ठितानि । एतस्मात् स्पष्टं यत् मम वासस्थानं केनचित् ज्ञातम् इति । अतः अहम् अन्यत्र गच्छन् अस्मि । भवता मम महान् उपकारः कृतः । धनदाने असमर्थः अपि अहम् अग्रे केनचित् रूपेण भवतः साहाय्यं करिष्यामि एव'' इति उक्त्वा ततः निर्गतवान् ।

राक्षसस्य गमनसमनन्तरं भानुमत्याः वेदना इतोऽपि प्रवृद्धा । सा रुदती उक्तवती - ''मम हस्तौ पादौ च शक्तिहीनौ । महती पिपासा । सर्वेषु सन्धिषु वेदना । नेत्रे च तपतः । कृपया किञ्चित् औषधं ददातु'' इति ।

रघुनन्दनः धावन् पत्न्याः प्रकोष्ठं गत्वा नाडीं परीक्ष्य आश्चर्येण अवदत् - ''राक्षसे यः रोगः आसीत् तस्यैव लक्षणानि भवत्यां दृश्यन्ते ! कथमेतत् इति तु न ज्ञायते'' इति ।

पत्युः वचनं श्रुतवत्याः भानुमत्याः मुखं विवर्णं जातम् । सा रुदती एव आत्मना कृतं सर्वं पतिम् निवेद्य क्षमां प्रार्थयन्ती उक्तवती - ''राक्षसस्य पापभूयिष्ठं धनं शुष्ककूपे क्षिपतु तावत् । तत् यावत् गृहे भवति तावत् अहं स्वस्था न भविष्यामि'' इति ।

तदा रघुनन्दनः अवदत् - ''धनं सदा परिशुद्धम् एव । उपयोक्तुः उद्देशम् अवलम्ब्य तस्मिन् सदसद्भेदः । कूपे धनस्य क्षेपणम् अपि दोषाय । तत् धनं वयं तु न इच्छामः । अतः तत् ग्रामाधिकारिणे यच्छाम । सः ग्रामजनानां कल्याणाय तस्य उपयोगं करोतु नाम । ततः वयम् अपि अल्पं पुण्यं प्राप्नुयाम'' इति ।

भानुमती सहमतिं दर्शयन्ती अवदत् - ''भवतः कथनं युक्तम् । लोककल्याणात् अस्माकम् अपि हितम् । मयि तु धनपिशाचः प्रविष्टः आसीत् । अतः दुर्बुद्धिः उत्पन्ना । इदानीं तु मया विवेकः प्राप्तः अस्ति । धिक् धनं पतनहेतुकम्'' इति ।

''राक्षसाय यत् औषधं दत्तं तस्य अल्पः भागः भवत्या सेव्यते चेदपि भवती स्वस्था भविष्यति । अतः अलं चिन्तया'' इति वदन् पत्न्यै औषधं दत्तवान् रघुनन्दनः ।





# सुवर्णसिंहासनम्-७

*[एकत्र चम्पकराजः मरालभूपतिः कालिन्दीराजस्य कुन्दराजस्य च साहाय्यं स्वीकृत्य कौण्डिन्यदेशं वशीकर्तुम् उद्युक्तः । अपरत्र कौण्डिन्यराजकुमारस्य विजयदत्तस्य पट्टाभिषेकः प्रवर्तते । कालिन्दीराजः माधवसेनः निर्णीतवान् यत् मरालभूपतिना सह गत्वा अपि अहं कौण्डिन्यदेशस्य एव साहाय्यं करिष्यामि इति । एतं विषयं मरालभूपतिः न जानाति । विजयदत्तः स्वर्णसिंहासनस्य प्रथमसालभञ्जिकायाः प्रश्नानाम् उत्तरं दत्त्वा प्रथमं सोपानम् आरूढवान् । तदा द्वितीया सालभञ्जिका कथायाः आरम्भं कृतवती । तदनन्तरम् ....]*

पूर्वं सुवर्णगिरिराज्यं कुशध्वजः नाम राजा पालयति स्म । सः मन्त्रिणां सहयोगं मार्गदर्शनं च काले काले प्राप्नुवन् उत्तमरीत्या राज्यं पालयति स्म । तस्य एकः पुत्रः आसीत् मलयध्वजनामकः । सः आ बाल्यात् एव असाधारणप्रतिभाशाली । बाल्यकाले एव तदीयं सामर्थ्यविशेषं दृष्ट्वा मन्त्रिणः सूचितवन्तः यत् प्रसिद्धस्य गुरोः कृष्णचन्द्रस्य आश्रमं प्रति युवराजस्य प्रेषणं वरम् इति । तदनुगुणं राजा पुत्रं गुरुकुलं प्रापितवान् ।

कुशाग्रमतेः असाधारणप्रतिभायाः च कारणतः मलयध्वजः अल्पे एव काले गुरोः विशेषकृपापात्रं जातः । समर्थशासकलक्षणानि सर्वाणि तस्मिन् आसन् । अध्ययनं समाप्य यावत् सः राजधानीं प्रतिगन्तुं सन्नाहं कुर्वन् आसीत्, तावता अतिघोरा काचित् वार्ता आगता - 'प्रतिवेशिराजः वज्रकीर्तिः अन्याय्याक्रमणेन सुवर्णगिरिं वशीकृत्य राजानं राज्ञीं च निर्दयं संहृतवान्' इति ।

एतां वार्तां श्रुतवान् मलयध्वजः वज्राघातं प्राप्तवान् इव । गुरुः कृष्णचन्द्रः तं सान्त्वयन् अवदत् - ''वत्स ! आकस्मिकतया प्राप्तम् एतत् दुःखं महान्तं खेदं जनयति इति तु सत्यम् एव । किन्तु दुःखावेगवशात् रोदनं कुर्वता स्थीयते चेत् अग्रे अन्यानि अपि कष्टानि अनुभोक्तव्यानि स्युः । इदानीं भवतः प्राणापायसम्भावना अस्ति । अतः कानिचन दिनानि भवान् अत्रैव निवसतु'' इति ।

तदा मलयध्वजः महता खेदेन आक्रोशमिश्रितस्वरेण च उक्तवान् - ''गुरुवर्य ! सकृत्



रक्तरुचिं ज्ञातवान् व्याघ्रः पुनरपि रक्तपानार्थं प्रयत्नं कुर्यात् एव । भयकारणतः आत्मानं निगूह्य स्थितं चेत् आपतितं कष्टं सकृत् निवारितं भवेत् । किन्तु भयहेतुः तु जीवति एव । अतः व्याघ्रस्य संहारः एकः एव भयनिवारणमार्गः । तदा एव निश्चिन्तता । अन्यच्च गुरुदेव ! एतस्याः समस्यायाः अपरम् अपि मुखं मनसि आकलनीयम् अस्माभिः । मम मातापितरौ रात्रौ शयनागारे एव शत्रुभिः मारितौ जातौ यत् ततः स्पष्टं भवति - विश्वासघातुकता अस्मत्परिसरे एव कुत्रचित् अस्ति इति । इदानीं प्रजानां सहानुभूतिः अस्मदनुकूला अस्ति । अतः मया शीघ्रातिशीघ्रम् इतः निर्गत्य रहस्यरूपेण देशस्य राजनैतिकस्थितिः अवगन्तव्या'' इति ।

एतत् श्रुत्वा कृष्णचन्द्रः अवदत् - ''वत्स ! अहं भवतः कुशाग्रबुद्धिं धैर्यम् आत्मविश्वासं च जानामि । अतः भवतः निर्णयं विरोद्धुं मम इच्छा सर्वथा नास्ति । भवान् यत् करोति तत्र मम आशीर्वादः तु सदा भविष्यति । विजयी भव विजयदत्त !'' इति ।

गुरोः आशीर्वादं प्राप्य मलयध्वजः साधारणमनुष्यवेषेण चन्द्रहासखड्गं धृत्वा अश्वम् आरुह्य आश्रमतः निर्गतः ।

सुवर्णगिरिसीमाप्रदेशे एकं स्वतन्त्रं भिल्लराज्यम् आसीत् । तस्य राजा सिंहगुप्तः । सः कुशध्वजस्य आप्तमित्रम् । मलयध्वजः सन्ध्यासमये तत् राज्यं प्राप्य सिंहगुप्तेन मिलितवान् । स्वपरिचयादिकम् उक्त्वा आक्रमणविचारं अपि तं निवेदितवान् ।

मलयध्वजस्य मेलनात् सन्तुष्टः सिंहगुप्तः अवदत् - ''यावत् अहं भवतः सम्पर्कं चिन्तयन् आसं तावता भवान् एव अत्र उपस्थितः । मम सैन्यं सिद्धम् अस्ति । अहं भवतः साहाय्यं करिष्यामि । वज्रकीर्तेः मारणं कृत्वा यावत् भवते सुवर्णगिरिः न प्रतिदाप्यते तावत् मम न निश्चिन्तता'' इति ।

''किन्तु एतस्य कार्यस्य साधनार्थं सैन्यं न आवश्यकं मम । शत्रुः अपायसम्भावनां मनसि निधाय महत् सैन्यं सज्जीकृतवान् स्यात् एव । दुर्गस्य अन्तः सर्वविधसन्नाहं कृत्वा महता सैन्येन सह स्थितं शत्रुम् अस्माकम् अल्पं सैन्यं कथं वा सम्मुखीकर्तुं शक्नुयात् ? अतः सेनासाहाय्येन विजयस्य प्राप्त्यर्थं प्रयासः न हि कालोचितः इति भाति मम । शत्रुः यादृशेन कापट्येन मम मातापितरौ मारितवान्

तादृशेन एव कापट्येन सः संह्रियते मया । एतस्मिन् कुतन्त्रे अस्मत्सेनायाः मुख्याधिकारी एव कश्चित् विश्वासघातम् आचरितवान् इति अहं तर्कयामि । अतः वस्तुस्थितिम् आदौ ज्ञात्वा अग्रिमयोजना करणीया मया । एतदर्थं मह्यं सेना न आवश्यकी । प्रत्युत भवत्पक्षीयः एकः कुशलः योद्धा, किञ्चित् धनं, कानिचन आभरणानि, काञ्चन विषाक्तसूचयः च मह्यम् आवश्यकानि, न अन्यत् किमपि'' इति अवदत् मलयध्वजः ।

सिंहगुप्तः मलयध्वजस्य आशयम् अवगच्छन् अवदत् - ''भवतः योजना युक्ता एव । किन्तु तदर्थम् अपि किम् एतावन्ति एव साधनानि पर्याप्तानि ?'' इति ।

''आम् ! यदि दैवम् अनुग्रहं कुर्यात् तर्हि एतावन्ति एव साधनानि पर्याप्तानि मम'' इति आत्मविश्वासपूर्वकम् अवदत् मलयध्वजः ।

''भवतु नाम । श्वः प्रातःकाले भवता सूचितानि सर्वाणि प्राप्यन्ते । इदानीं भोजनं कृत्वा विश्राम्यताम्'' इति अवदत् सिंहगुप्तः ।

अनन्तरदिने प्रातः सिंहगुप्तः एकेन सैनिकेन सह मलयध्वजसमीपम् आगत्य मन्दहासपूर्वकम् अवदत् - ''औपचारिकपरिचयस्य न काऽपि आवश्यकता इति अयं जनः भावयति । एषः चिन्तयति यत् भवान् एतदीयं सामर्थ्यं शक्तिं च काले स्वयं ज्ञास्यति इति'' इति ।

'मम बुद्धिपरीक्षां कुर्वन् अस्ति सिंहगुप्तः' इति ज्ञातवान् मलयध्वजः अपि मन्दहासपूर्वकम् अवदत् - ''कुशाग्रमतिः वीराङ्गना युवराज्ञी शालिनी मया सह तिष्ठति चेत्



विजयः कुतो वा निश्चितः न स्यात् ? अतः मम सङ्कल्पः सिद्धः भविष्यति इत्यत्र पूर्णः विश्वासः मम'' इति ।

मलयध्वजस्य वचनं श्रुत्वा शालिनी लज्जया शिरः अवनमय्य स्थितवती ।

सिंहगुप्तः आश्चर्येण अवदत् - ''मलयध्वज ! सैनिकः न पुरुषः, प्रत्युत स्त्रीजनः इति कथं ज्ञातं भवता ? मम पुत्री शालिनी तु भवता न दृष्टा एव । तथापि भवान् कथं ताम् अभिज्ञातवान् ? भवतः बुद्धिमत्ता सूक्ष्मेक्षिकता च निश्चयेन श्लाघनीया । भवान् उद्देशं साधयिष्यति एव इति इदानीं मया निस्सन्देहम् अवगतम्'' इति ।

''युद्धकलायां सुनिपुणायां पुत्र्यां स्थितायां, भवान् मम साहाय्यार्थम् अन्यं न



प्रेषयेत् इति मया ज्ञातम् आसीत् । अतः अहं विशेषपरिश्रमं विनैव राजकुमारीम् अभिज्ञातवान्'' इति अवदत् मलयध्वजः ।

एतत् उत्तरं प्राप्य यद्यपि सिंहगुप्तः न पूर्णरूपेण तृप्तः, तथापि वास्तविकस्य कारणस्य ज्ञाने अत्युत्साहम् अप्रदर्शयन् सः मलयध्वजाय अपेक्षितानि वस्तूनि दत्त्वा उभौ अपि आशिषा अनुगृह्य ततः प्रेषितवान् ।

मलयध्वजः शालिनी च अश्वम् आरूढवन्तौ । तयोः आदेशं प्राप्य अश्वौ वायुवेगेन धावनम् आरब्धवन्तौ ।

सूर्यास्ततः किञ्चित् पूर्वं तौ सुवर्णगिर्याः राजधान्याः समीपे स्थिते वने विश्रान्त्यर्थं किञ्चित्कालं स्थितवन्तौ । तदा शालिनी पृष्टवती - ''प्रातः मम पित्रा यदा पृष्टं तदा भवता समुचितम् उत्तरं न दत्तम् । पुरुषवेषधारिणीम् अपि मां भवान् वस्तुतः कथम् अभिज्ञातवान् ?'' इति ।

''काऽपि स्त्री कमपि वेषं धृतवती स्यात् चेदपि सामान्यस्थितौ सा स्वस्य सुकुमारतां, लज्जाशीलतां, नेत्रयोः चञ्चलतां च गोपयितुं सर्वथा न अर्हति । विषमपरिस्थितौ सा अन्यविधा भवेत् कदाचित् । अतः भवत्याः अभिज्ञाने मया कष्टं न अनुभूतम्'' इति मन्दहासपूर्वकम् अवदत् मलयध्वजः ।

ततः तौ पुनरपि अश्वम् आरूढवन्तौ ।

अन्धकारप्रसारात् पूर्वं तौ राजधानीसमीपम् आगतवन्तौ । नगरात् अनतिदूरे स्थिते वने वृक्षसमूहात्मके प्रदेशे तौ अश्वात् अवतीर्य अश्वं वृक्षे बद्धवन्तौ । एकं प्रहरं यावत् नगरं प्रति गमानागमनकर्तॄणां परिशीलनं कृतम् । ततः तौ नगरं प्रविश्य साधारण-जनवास-योग्येषु मार्गेषु सञ्चारम् आरब्धवन्तौ ।

तावता रात्रेः द्वितीयः प्रहरः अपि अतीतप्रायः आसीत् । अतः सर्वत्र निश्शब्दता दृश्यते स्म । जनाः द्वाराणि पिधाय शयन-सन्नाहं कुर्वन्तः आसन् । मलयध्वजः शालिनी च अन्धकारमयेषु मार्गेषु जागरूकतया पदं स्थापयन्तौ अग्रे गच्छन्तौ आस्ताम् ।

एवं गमनसमये कस्मिंश्चित् गृहे प्रचलन् वार्तालापः ताभ्यां श्रुतः । भित्तिपार्श्वे स्थित्वा वातायनद्वारा दृष्टिः ताभ्याम् अन्तः प्रसारिता । तत्र पतिपत्न्यौ वार्तालापमग्नौ ताभ्यां दृष्टौ । तौ सावधानं तयोः वार्तालापं श्रुतवन्तौ ।

पत्नी पृष्टवती - ''किम् एते दुष्टाः राजकुमारस्य अपि हननं कुर्युः ?'' इति ।

तदा पुरुषः अवदत् - ''वज्रकीर्तेः राज्य-वशीकरणदाहः । इष्टसाधनार्थं दुष्टः सः धर्माधर्मादिकम् अपि न चिन्तयति । राज्यप्राप्त्यर्थं युवराजं संहर्तुम् अपि सिद्धः एव सः । युवराजः गुरुकुलस्य आश्रमे अस्ति इति तु सौभाग्याय । तथापि न ज्ञायते - शत्रुः स्वस्य कुतन्त्रहस्तं कियत्पर्यन्तं प्रसारितवान् स्यात् इति'' इति ।

''हा हन्त ! भगवता एव रक्षणीयः अस्माकं राजकुमारः !'' इति करौ योजयित्वा उक्तवती स्त्री ।

क्षणकालस्य मौनस्य अनन्तरं पुरुषः अवदत् - ''अस्मदीयाः एव यदि वञ्चयेयुः तर्हि भगवान् अपि कस्यचित् रक्षणे असमर्थः भवेत् । वस्तुतः एतस्मिन् प्रकरणे मुख्यदोषी अस्ति दुष्टः सेनापतिः कन्दर्पः । विश्वासद्रोही सः । वस्त्रेण बद्धः ज्वलन् अङ्गारः इव सः । वस्तुतः बाह्यशत्रुतः अपि अधिक-अपायकारी भवति आन्तरशत्रुः । राज्ञः रक्षकाः एव भक्षकाः संवृत्ताः । एतादृशाः पापिनः खण्डशः कर्तयित्वा गृध्रेभ्यः आहाररूपेण अर्पिताः चेदपि न काऽपि हानिः'' इति ।

तदा स्त्रीध्वनिः आश्चर्येण अपृच्छत् - ''किं कन्दर्पः एव राज्ञीराजयोः संहर्ता?'' इति ।

''अये ! मन्दस्वरेण वदतु । एतत् सम्भाषणं कोऽपि शृणोति चेत् प्राणापायः सम्भवेत् । मध्यरात्रः अतीतः । भवती निद्रां करोतु तावत्'' - पुरुषः अवदत् ।

यदा सम्भाषणं समाप्तं तदा मलयध्वजः द्वारताडनशब्दं कृतवान् । अन्तर्भागतः कोऽपि प्रतिस्पन्दः न दृष्टः । मलयध्वजः पुनरपि



द्वारताडनशब्दं कृतवान् । तदा पुरुषः अन्तर्भागतः अपृच्छत् - ''कः तत्र ?''

''भवन्मित्रम्'' इति अवदत् मलयध्वजः ।

अल्पे एव काले द्वारम् उद्घाटितम् । मलयध्वजः शालिनी च अन्तः गतवन्तौ । द्वारं पुनरपि पिहितम् अभवत् ।

गृहस्वामी सुकेतुः तस्य पत्नी च मध्यरात्रे गृहं प्रति आगतौ आगन्तुकौ युवकौ दृष्ट्वा आश्चर्यचकितौ भीतौ च ।

तदा मलयध्वजः स्वपरिचयम् उक्तवान् । 'उपस्थितः युवराजः एव' इति ज्ञातवतः सुकेतोः महान् आनन्दः आश्चर्यातिरेकः च । युवराजस्य उपस्थित्या सः आत्मानं धन्यं मतवान् । मलयध्वजः सुकेतौ विश्वासं प्रदर्शयन् तस्य मुखात् विविधानि विवरणानि



प्राप्तवान् । अनन्तरं शत्रुराजस्य, सेनापतेः कन्दर्पस्य च निग्रहार्थम् आत्मना चिन्तितां योजनां तं निवेदितवान् च । सुकेतुः युवराजस्य सर्वविधसाहाय्यं कर्तुं सिद्धः सन् अवदत् - ''भवान् एव अस्माकं राजा । यत् प्रवृत्तं तद्विषये सर्वासां प्रजानां महान् खेदः अस्ति । कुतन्त्रं तावत् गुप्तरूपेण प्रवृत्तं यत् राजभवनस्य ज्येष्ठाधिकारिणः अपि तस्य गन्धं न आघ्रातवन्तः । एतत्कारणतः प्रजासु संक्षोभः अन्तर्वाहिनीरूपेण अस्ति । कन्दर्पस्य समर्थकाः केचन स्युः । अवशिष्टाः सर्वे राजोद्योगिनः, प्रजाः च भवत्पक्षे एव सन्ति । भवतः आदेशस्य अनुगुणं यत्किमपि कर्तुं सिद्धाः स्मः एव वयम्'' इति ।

''अस्माभिः प्रकटतया किमपि करणीयं नास्ति । प्रकटतया यदि किमपि क्रियते तर्हि मम, प्रजानां च अहितम् एव सिद्ध्येत् । अतः अहं यथा सूचयामि तथा कुर्वन्तु भवन्तः । भगवत्कृपया अन्ते सत्पक्षस्य एव जयः भवेत्'' इति अवदत् मलयध्वजः ।

अनन्तरदिने प्रातः सुकेतुः मलयध्वजस्य आदेशस्य अनुगुणं वज्रकीर्तेः शयनागारस्य रक्षकभटं गुरुं स्वगृहं प्रति आनायितवान् । मलयध्वजः स्वपरिचयम् उक्त्वा आत्मना चिन्तिते कार्ये तस्य साहाय्यं प्रार्थितवान् । एतत् श्रुत्वा गुरुः भयेन कम्पमानः जातः । तदा मलयध्वजः स्वस्य कोषतः एकम् अमूल्यं हारं निष्कास्य दर्शयन् अवदत् - ''भवता करिष्यमाणस्य कार्यस्य निमित्तं मम उपायनम् एतत् । कार्यं यदि यशस्वि भवेत् तर्हि इतोऽपि दशगुणितः पुरस्कारः प्राप्येत भवता । अलं भीत्या । भवान् सत्यस्य न्यायस्य च पक्षम् अवलम्ब्य कार्यं कुर्वन् अस्ति, न तु पाप-पक्षस्य । एतस्य धर्मकार्यस्य अनुष्ठानतः भवता पुण्यम् अपि प्राप्यते'' इति ।

गुरुः हारस्य स्वीकारं निराकुर्वन् - ''भवान् एव अस्माकं वास्तविकः राजा । भवतः साहाय्यकरणं मम धर्मः । कर्तव्यपालनार्थम् उपायनस्य अपेक्षा न करणीया खलु ? भवान् अस्माकं राजा भवेत् इत्येव अस्मदीया अपेक्षा । अद्य रात्रौ द्वितीये प्रहरे भवान् मत्समीपम् आगच्छतु'' इति उक्त्वा चरण-स्पर्शपूर्वकं नमस्कृत्य ततः निर्गतवान् ।

एतदनन्तरं मलयध्वजः कन्दर्पस्य शयनागारस्य रक्षकं वीरं स्वसमीपम् आनायितवान् । मलयध्वजस्य परिचय-

प्राप्त्यनुक्षणम् एव वीरस्य मुखं विवर्णं जातम् । भयेन कम्पमानः जातः सः । सः मलयध्वजस्य पादौ गृहीत्वा - ''एषोऽहं भवतः एव सेवकः । भवतः आदेशं शिरसा वक्ष्यामि'' इति प्रतिज्ञाम् अकरोत् ।

मलयध्वजः स्वकोषात् एकां सूचीं निष्कास्य वीरस्य हस्ते लगितवान् । वीरः वेदनया क्रन्दनम् अकरोत् । मलयध्वजः तस्य मुखं वस्त्रेण बद्धवान् । सुकेतु-शालिन्योः साहाय्येन तदीयौ हस्तौ पादौ चापि बद्धौ ।

ततः मलयध्वजः सुकेतुं सम्प्रेष्य वीरस्य पत्नीं पुत्रं च आनायितवान् । तयोः शरीरे अपि सूच्यौषधं योजितम् । ततः तौ विसंज्ञौ जातौ । अनन्तरं मलयध्वजः वीरसमीपम् आगत्य - ''भवतः मनसि स्थितं कपटभावम् अभिजानन् अहं भवति वृश्चिकविषं योजितवान् । भवतः पत्नीपुत्रौ इदानीं मूर्च्छां गतौ स्तः । भवान् मम साहाय्यं करोति चेत् एव भवत्परिवारः सुखेन तिष्ठेत् । यदि मम वचनं तिरस्क्रियेत तर्हि भवतः भवत्परिवारस्य च प्राणापायः निश्चितः'' इति असूचयत् ।

मलयध्वजस्य वचनस्य गाम्भीर्यम् अवगच्छन् वीरः मृदुतां गतः । पत्नीपुत्रयोः प्राणापायम् अनिच्छन् सः करौ योजयित्वा मलयध्वजम् अवदत् - ''भवान् यथा आदिशति तथा क्रियते श्रीमन् !'' इति ।

'एषः इतः परं कपटव्यवहारं न करिष्यति' इति सम्यक् अवगतवान् मलयध्वजः एकम् औषधं पाययित्वा अवदत् - ''एतस्य औषधस्य सेवनेन भवतः शरीरे विषपरिणामः न्यूनः भविष्यति । मया यथा उक्तं तथा भवता आचरणीयम् अद्य रात्रौ । तथा चेत् श्वः प्रातः भवान् पत्नीपुत्राभ्यां सह सन्तोषेण स्थास्यति । यदि कपटता कापि आचर्येत तर्हि भवता पत्नीपुत्रयोः शवः द्रष्टव्यः भविष्यति'' इति ।

-*(अनुवर्तते)*



## ५. अरण्यतां गतं महत् राज्यम्

"भारतीयस्थानानां प्राचीननाम्नां या सूची भवता दत्ता सा चित्ताकर्षिका आसीत् । एषा प्राचीनकाले स्थितानां बहूनां महापुरुषाणां जीवनगाथां स्मारयति" इति चमेली अवदत् देवनाथसन्दीपाभ्यां सह नदीतीरे विहरन्ती ।

"एतेषां नाम्नां कारणतः महापुरुषाणां यथा, तथैव महाकार्याणाम् अपि परिचयः प्राप्यते । एवं ननु तात !" इति अवदत् सन्दीपः ।

देवनाथवर्यः नदीतीरस्थे आसने उपविश्य दिगन्ते अस्ताचलम् आरोहतः सूर्यस्य सौन्दर्यं निर्निमेषं द्रष्टुम् उद्युक्तः अभवत् ।

"वत्सौ ! स्थलनामानि सर्वदा महापुरुषान् एव स्मारयन्ति इति न । लोकोत्तराणां जनानां, नारीणां च मनः अवगन्तुं न शक्यते इति किञ्चन वचनं श्रूयते । लोकोत्तराः ऋषयः करुणासागराः । ते तादृशानि अपि कानिचन स्थलनामानि कृतवन्तः, यैः सम्बद्धाः जनाः न वीराः, न कुलीनाः, न वा महापुरुषाः । असामान्यघटनायाः कस्याश्चित् अङ्गभूताः आसन् ते इत्येकेन एव कारणेन ते स्थलनामसम्बन्धं प्राप्तवन्तः । यदि तादृशानां नाम्नां दीर्घजीवनं न कल्प्येत तर्हि ताः असामान्यघटनाः कालवशात् जनैः विस्मृताः स्युः इति विचिन्त्य तैः तथा कृतं स्यात्" इति अवदत् देवनाथवर्यः ।

"यदि तादृश्यः घटनाः विस्मृताः स्युः तर्हि का वा हानिः अभविष्यत् ? घटनास्मारणार्थम् अपात्राणां नाम्नाम् अमरत्वकल्पनं दोषाय एव खलु भवेत् ?" - सन्दीपः अवदत् ।

"काश्चन घटनाः तथा महत्त्वपूर्णाः भवन्ति यत् तासां स्मारणम् अत्यावश्यकं भवति । यदा घटनाः स्मार्यन्ते तदा तत्सम्बद्धानि कानिचन अपात्राणि अपि स्मृतिपथम् आगच्छेयुः एव । यदि कृष्णः स्मर्यते तर्हि कंसः अपि स्मृतः स्यात् एव खलु ? कृष्णचरित्रतः कंसं वयं पृथक्कर्तुं सर्वथा न शक्नुमः । अतः महापुरुषस्य स्मरणावसरे अल्पयोग्यताकस्यापि स्मरणम् अपरिहार्यं भवति" इति अवदत् देवनाथवर्यः ।



*अनुवर्तमाना कथामाला*

## रव-गाथा

''यत्र अल्पयोग्यताकस्य एव प्राधान्यं भवति तादृशी काऽपि घटना किं प्रवृत्ता ?'' इति पृष्टवती चमेली ।

''तादृश्यः घटनाः बह्व्यः सन्ति एव । दण्डकारण्यम् एकम् उदाहरणम् । कस्यचन युवराजस्य कारणतः एतत् नाम प्रसिद्धं जातम् । स तु राजा कथमपि योग्यत्वेन परिगणयितुम् अनर्हः आसीत्'' - देवनाथवर्यः अवदत् ।

''दण्डकारण्यं तदेव खलु, यस्य च प्रस्तावः रामायणे दृश्यते ? तत् काल्पनिकम् अरण्यं न वा ?'' - इति पृष्टवती चमेली ।

''तत् काल्पनिकम् इति कथं चिन्तितं भवत्या ? इदानीं दण्डकारण्यम् यत्र अस्ति तत्र बहुपूर्वम् एकं विशालं नगरम् आसीत् । तस्य स्थलस्य यादृशं वैशिष्ट्यं तादृशं प्रायः अन्यस्य कस्यापि न आसीत्'' - देवनाथवर्यः अकथयत् ।

'दण्डकारण्यं पौराणिकं खलु ? तद् इदानीम् अपि अस्ति इति किं भवतः आशयः ?'' चमेली कुतूहलेन पृष्टवती ।

''वत्से ! भारते प्रतिवर्षं २५३५० हेक्टेर्-परिमितम् अरण्यं विविधैः कारणैः नाश्यते । एवं स्थिते तत् अरण्यम् इदानीम् अपि अस्ति किम् इत्ययं प्रश्नः कथं वा सुसङ्गतः भवेत् ? दण्डकारण्यम् इदानीं न स्यात्, किन्तु स च प्रदेशः तु अस्ति एव । रामायणस्य बह्वीनां घटनानां साक्षिभूतम् अस्ति तत् अरण्यम् । राक्षसी शूर्पणखा अत्रैव रामस्य पुरतः विवाहप्रस्तावम् उपस्थापितवती । ततः कुपितः लक्ष्मणः तस्याः अङ्गच्छेदं कृतवान् । अत्रैव यज्ञादि-पवित्रकर्मणः विघ्नम् आचरतः बहून् राक्षसान् संहृतवान् रामः । अत्रैव रावणः सीताम् अपहृतवान् । एतस्मिन् एव अरण्ये रावणस्य सीतापहरणयत्नं विरुध्य युद्धं कृत्वा जटायुः प्राणार्पणं कृतवान् । एतादृशं विशिष्टं वनम् अद्य ओडिस्सा-आन्ध्रप्रदेश-मध्यप्रदेशराज्येषु विभक्तं सत् तिष्ठति ।''

''तात ! रामायणघटनाः अस्माभिः श्रुतपूर्वाः । किन्तु दण्डकारण्यस्य कथा अद्यापि न श्रुता एव । तां वदतु कृपया'' इति सन्दीपः



स्मारितवान् ।

देवनाथवर्यः कथाम् आरब्धवान् - ''प्राचीने काले दण्डवंशीयाः राजानः विशालं भूभागं परिपालयन्ति स्म । तस्मिन् वंशे दण्डकः नाम कश्चन राजा आसीत् । विलासप्रियः सः आमोद-प्रमोदादिभिः कालं यापयति स्म ।



कदाचित् सः अश्वम् आरुह्य गच्छन् एकस्य सरोवरस्य समीपे स्थितवान् । स्नानं समाप्य आगच्छन्ती काचित् सुन्दरी तेन दृष्टा । तां दृष्ट्वा दण्डकः अचिन्तयत् - 'लोके एतादृशी अनुपम-सुन्दरी अपि भवितुम् अर्हति किम् ?' इति ।

अश्वारोहिणं युवकं दृष्ट्वा लज्जिता सा सुन्दरी अन्यां दिशम् अनुसृतवती । दण्डकः अश्वात्



अवतीर्य तस्याः अतिसमीपं गतवान् ।

''किं भवान् मार्गभ्रष्टः अस्ति ? अथवा किमपि साहाय्यम् अपेक्षते भवता ?'' इति पृष्टवती सा तरुणी ।

तदा दण्डकः अवदत् - ''अहं यत्र गच्छामि सः एव मार्गः । यतः एतस्य सर्वस्य स्वामी राजा अस्मि । अतः मार्गभ्रष्टतायाः प्रश्नः नास्ति । हाम्, आवश्यकता काचित् तु अस्ति । भवती मह्यम् आवश्यकी । अहं भवतीं परिणेतुम् इच्छामि'' इति ।

तदा सा उक्तवती - ''भवान् आत्मानं राजानं निर्दिष्टवान्, तथापि भवतः राजत्वे मम सन्देहः अस्ति । राज्ञः व्यवहारः राजोचितः एव स्यात् खलु ? काऽपि महिला परिस्थितिद्वये कमपि परिणेतुम् अर्हति । यदि विवाहप्रस्तावः तस्याः सम्मतः स्यात्, यदि वा स च मातापितृभ्याम् उपस्थापितः स्यात् तर्हि एव सा विवाहम् अङ्गीकर्तुम् अर्हति । भवतः परिणयविषये न अहं सहमता, न वा भवता मम मातापित्रोः अनुमतिः सम्पादिता । अतः आवयोः विवाहः भवितुं न अर्हति'' इति ।

तदा दण्डकः अट्टहासं कृत्वा अवदत् - ''अये गर्वितबाले ! यः कोऽपि कन्यापिता जामातृत्वेन मम प्राप्तिं परमसौभाग्यं भावयेत् । अनुमति-प्राप्त्यादयः शिष्टाचाराः विलम्बकारकाः । अतः तेषां पालने न मम आसक्तिः । भवती मया सह आगच्छतु । राजधानीं प्राप्य मन्त्रिणां द्वारा उपायनैः पूर्णान् शकटान् एव सम्प्रेष्य भवत्याः पितरं सन्तुष्टं कारिष्यामि'' इति । एतावत् उक्त्वा सः तस्याः हस्तं ग्रहीतुम् उद्युक्तः ।

सा शुक्राचार्यस्य पुत्री अरजा । ततः अनतिदूरे एव आश्रमः आसीत् । स्नानार्थम् एतत् सरः आगतवती आसीत् सा । दण्डकस्य हस्तग्रहण-प्रयत्नं निवार्य सा अवदत् - ''अये ! परमोद्धत, अविवेकिन् ! धिक् भवन्तम् । मम पिता कश्चन महर्षिः । सः भवदीयं समग्रं साम्राज्यम् एव प्राप्य अपि सन्तुष्टः न भवेत् । उत्तमः व्यवहारः एव तं तोषयितुम् अर्हति, न तु धनादिकम् । चरित्रम् एव सर्वश्रेष्ठं मन्यते सः'' इति ।

दण्डकः अरजां पुनरपि ग्रहीतुं प्रयत्नं कृतवान् । ततः आत्मनः विमोचनार्थम् अरजा बहुधा प्रयत्नं कृतवती । एतदवसरे तस्याः शरीरे व्रणाः जाताः ।

''अये नीच, दुष्ट ! शीघ्रम् अपसरतु इतः ।

अन्यथा उद्दण्डतायाः योग्यं फलं प्राप्यते'' इति उक्त्वा कथञ्चित् ततः आत्मानं विमोच्य गुल्मानां मध्ये कुत्रापि अदृश्या अभवत् सा । स च प्रदेशः समग्रः तया ज्ञायते स्म एव । तां पुनरपि ग्रहीतुं न शक्तवान् दण्डकः ।

ततः अनतिदूरे नदीतीरे शुक्राचार्यस्य आश्रमः आसीत् । ध्यानमग्नः शुक्राचार्यः रोदनशब्दं श्रुत्वा नेत्रे उद्घाटितवान् । पुरतः भीता कम्पमाना रुदती पुत्री दृष्टा तेन ।

''वत्से ! किं जातम् ? किमर्थम् एषा दुर्दशा ?'' इति अपृच्छत् मुनिः ।

पितुः सान्त्वनं प्राप्य किञ्चित्कालानन्तरं सा प्रवृत्तं समग्रं पितरं निवेदितवती ।

मुनिः तपोबलेन ज्ञातवान् यत् औद्धत्यव्यवहारं कृतवान् राजा दण्डकः एव इति । दण्डकस्य समग्रं राज्यम् एतादृशैः व्यवहारैः पूर्णम् अस्ति इत्यपि सः अवगतवान् ।

अतः सः एकं यज्ञम् आरब्धवान् । तदीयं राज्यम् एव नाशयितुं समर्थां प्रबलां शक्तिं सः आवाहितवान् । ततः सः शापं दत्तवान् - ''पवित्रात्मनः निर्दोषिजन-पशुभ्यः च ऋते समग्रं दण्डकराज्यम् एव अग्नेः आहुतिः भवतु'' इति ।

ततः अचिरात् एव राजधान्याम्, इतरनगरेषु, ग्रामेषु च अग्निज्वालाः उत्पन्नाः । कानिचन दिनानि यावत् प्रवृत्ते एतस्मिन् विनाशयज्ञे राजा दण्डकः, दुष्टाः तदनुयायिनः च आहुतयः जाताः । दण्डकस्य समग्रं साम्राज्यं दग्धं जातम् । प्राणैः सहिताः सज्जनाः पशुपक्षिणः च अन्यत्र गतवन्तः जीवधारणार्थम् ।

शताधिकक्रोशमितः भूभागः समग्रः भस्म-मयः जातः । अहो, अतिघोरा विनाशलीला !

दिनेषु गतेषु कालचक्रं परिवृत्तम् । वृष्टि-कारणतः तत्रत्या भूमिः आर्द्रा जाता । वायुना आनीतानि बीजानि तत्र अङ्कुरितानि । शताधिक-वर्षाणाम् अनन्तरं तत्र घोरम् अरण्यं निर्मितम् अभवत् । तच्च आदौ तपस्विनाम् ऋषि-मुनीनाम् आश्रयस्थानम् आसीत् । अनन्तरकाले तत् राक्षसादीनाम् अपि आश्रयस्थानम् अभवत् । ये ऋषिमुनयः एतस्य अरण्यस्य इतिवृत्तं जानन्ति स्म ते एतत् वनं दण्डकारण्यत्वेन निर्दिष्टवन्तः । एवं स च प्रदेशः दण्कारण्यत्वेन प्रसिद्धम् अभवत् ।''

''अपूर्वा घटना एषा'' इति सन्दीपः चमेली च युगपत् उक्तवन्तौ ।





# अविवेकी गर्दभः

कश्चन गुरुः। अनुग्रहोद्देशेन सः तदा तदा भक्तानां गृहं गच्छति स्म । स तु वृद्धः आसीत् । अतः दूरसञ्चारेण श्रान्तः भवति स्म सः । तथापि सः किमपि न वदति स्म, औदासीन्यं न प्रदर्शयति स्म वा। एकदा कश्चन शिष्यः एकं सुन्दरं गर्दभम् आनीय गुरवे समर्प्य अवदत् - ''श्रीमन् ! भवतः सञ्चारार्थम् एषः गर्दभः समर्प्यते मया । एषः साधुः परिश्रमशीलः च । एतस्य पोषणम् अपि न क्लेशाय'' इति ।

गुरुः यद्यपि पादाभ्यां गमने क्लेशं न पश्यति स्म, तथापि शिष्यस्य सन्तोषाय गर्दभं स्वीकृतवान् ।

अन्तरदिने तेन भूस्वामिनः गृहं प्रति गन्तव्यम् आसीत् । सः गर्दभस्य उपरि उपविश्य प्रयाणम् आरब्धवान् । शिष्यगणः तस्य अनुसरणम् अकरोत् । भूस्वामिगृहजनाः द्वारसमीपे एव गुरोः स्वागतं कृतवन्तः । तदुपरि पुष्पाणि विकीर्णवन्तः च । कानिचन पुष्पाणि गर्दभस्य उपरि अपि पतितानि । एतेन गर्दभस्य महान् सन्तोषः जातः ।

गुरुः गृहस्य अन्तः गतः । भूस्वामिनः सेवकाः गर्दभाय उत्तमम् आहारं दत्तवन्तः । ततः विश्रान्त्यर्थं तं गर्दभशालायां प्रशस्ते स्थले बद्धवन्तः च ।

''भवान् महान् संवृत्तः । अस्मज्जातीयः कश्चित् एवं विशिष्टगौरवपात्रं जातः इति तु अस्माकं सर्वेषां सन्तोषाय'' इति भूस्वामि-

गर्दभाः तं प्रशंसितवन्तः । गुरोः गर्दभः मन्दहासं प्रकटितवान् । स्वस्य महत्त्वस्य वृद्धिः तेनापि अनुभूयते स्म । द्वित्रघण्टानन्तरं गुरुः गर्दभम् आरुह्य आश्रमं प्रतिगतवान् ।

यदा गुरुः गर्दभम् आरुह्य भक्तानां गृहं गच्छति स्म तदा गर्दभस्य उपरि उपविष्टाय एव तस्मै नमस्कारं समर्पयन्ति स्म भक्ताः । एतस्मात् गर्दभः चिन्तयति स्म – 'सर्वे माम् अपि नमस्कुर्वन्ति' इति ।

एकदा कस्यचित् धार्मिककार्यक्रमस्य निमित्तं गुरुः त्रीणि दिनानि भूस्वामिनः गृहे एव वासं कृतवान् । तेषु दिनेषु गर्दभस्यापि सम्मानः । अतः भूस्वामिगृहं विशेषप्रियं जातं तस्य गर्दभस्य ।

कदाचित् सप्ताहं यावत् गुरुः आश्रमतः बहिः न गतः । अष्टमे दिने सः एकस्य भक्तस्य गृहं प्रति प्रस्थितवान् । प्रयाणलक्षणं ज्ञात्वा गर्दभः नितरां सन्तुष्टः । सर्वेषां प्रयाणम् आरब्धम् । मध्येमार्गम् एकः चतुष्पथः प्राप्तः । ततः एकः मार्गः भूस्वामिनः गृहं प्रति गच्छति स्म । अपरः गुरुणा गन्तुम् इष्टं भक्तस्य गृहं प्रति गच्छति स्म । गर्दभः भूस्वामिनः गृहस्य मार्गम् अनुसर्तुम् ऐच्छत् । कश्चन शिष्यः तम् अन्यमार्गं नेतुं प्रयत्नं कृतवान् । गर्दभः तेन मार्गेण गमनं निराकरोत् । शिष्याः बलात् तम् अपेक्षितमार्गेण नेतुं प्रयत्नम् अकुर्वन् । एतस्मात् गर्दभस्य महान् कोपः आगतः । सः क्रोधेन शरीरं कम्पयित्वा गुरुं पातयित्वा भूस्वामिनः गृहं प्रति अधावत् ।

भूस्वामिनः गृहम् अनतिदूरे एव आसीत् । गर्दभः महत्या आशया भूस्वामिगृहं प्राप्नोत् । यदा सः अङ्गणस्य अन्तः गन्तुम् उद्युक्तः तदा भूस्वामिनः कश्चन सेवकः आगत्य दण्डेन तं प्रहृत्य ततः अधावयत् ।

वेदनाम् अनुभवन् गर्दभः ततः किञ्चिद्दूरं गत्वा स्वगतम् अवदत् – ''प्रायः भूस्वामिनः सेवकः मां न अभिज्ञातवान्'' इति ।





# हासस्वातन्त्र्यम्

श्रीशाचार्यः प्रतिदिनं प्रातः एव कृषि-कार्यादीनां परिशीलनार्थं क्षेत्रं गच्छति स्म । आदिनं तत्रैव तिष्ठति स्म च । तस्य सेवकस्य पुत्री शान्ता मध्याह्ने तस्मै भोजनं नयति स्म । सायङ्कालपर्यन्तं तत्रैव लघूनि कार्याणि कानिचित् कृत्वा यदा आचार्यः प्रतिप्रतिष्ठते तदा तम् अनुसरति स्म सा ।

श्रीशाचार्यः वृद्धः स्थूलकायश्च । अतः लघुकार्यस्य निमित्तम् अपि सः अन्यसाहाय्यम् अपेक्षते स्म । शान्ता तस्य सर्वान् आदेशान् श्रद्धया पालयति स्म ।

एकदा भोजनानन्तरं श्रीशाचार्यः क्षेत्रस्य सीमाभागे सञ्चरन् अजारूकतावशात् आकाशाभिमुखं पतितः । क्षेत्रं तु पङ्कमयम् आसीत् । अतः तस्य समग्रं शरीरं पङ्के निमग्नम् । सः स्वस्य हस्तस्य साहाय्येन उत्थातुं प्रयत्नं कृतवान् । किन्तु तस्य प्रयत्नाः व्यर्थाः । शरीरस्थौल्यकारणतः सः उत्थातुं न शक्तः । शान्ता तस्य साहाय्यं कर्तुं प्रयासं कृतवती । किन्तु सा अपि असफला । श्रीशाचार्यः कष्टम् अनुभवन् एव अवदत् - ''समीपक्षेत्रे कार्यं कुर्वतः कर्मकरान् झटिति आह्वयतु'' इति ।

अनतिदूरे एव भूषणः कूपात् जलम् उद्धृत्य क्षेत्रे वाहयन् आसीत् । शान्ता यदा साहाय्यार्थं तम् आहूतवती तदा - ''योग्यं जातम् । ह्यः सः मां विना कारणं तर्जितवान् आसीत् । अतः भगवता योग्यः दण्डः विहितः'' इति वदन् सः आगमनं निराकृतवान् ।

शान्ता खेदेन यदा प्रत्यागच्छन्ती आसीत् तदा शिवः नाम कर्मकरः मिलितः । शान्तातः प्रवृत्तं श्रुत्वा सः अपि साहाय्यं निराकुर्वन् अवदत् - ''सः लम्बोदरः पङ्के एव निमग्नः भवतु नाम । निर्धनानां कष्टं किञ्चिदपि न जानाति सः । भूमौ शयनात् कीदृशं सुखं प्राप्यते इति जानातु नाम सः'' इति ।

शान्ता असहाया जाता । अत्रान्तरे क्षेत्रं

गच्छन्तौ नागः सोमश्च तया दृष्टौ । सा धावन्ती तयोः समीपं गत्वा श्रीशाचार्यस्य साहाय्यं करणीयम् इति प्रार्थितवती । श्रीशाचार्यः पङ्के पतितः अस्ति इति श्रुत्वा उच्चैः हसन् सोमः अवदत् - ''पङ्के पतित्वा कष्टम् अनुभवतः, इतस्ततः लुठतः स्थूलकायस्य तस्य दर्शनं महते आनन्दाय स्यात् । भवती एव भाग्यशालिनी'' इति ।

किन्तु नागः श्रीशाचार्यस्य कष्टं श्रुत्वा आर्द्रहृदयः जातः । ''अन्येषां कष्टसमये हसनं क्रौर्यद्योतकम् । धिक् एतां प्रवृत्तिम्'' इति सोमं निन्दित्वा सः झटिति श्रीशाचार्यस्य साहाय्यार्थं निर्गतवान् ।



श्रीशाचार्यः इतोऽपि उत्थातुं प्रयतमानः एव आसीत् । नागः हस्तसाहाय्येन तम् उत्थाप्य अवदत् - ''आर्य ! भवतः वयः अधिकम् । शक्तिः क्षीणा । अतः एकाकितया एवं क्षेत्रं प्रति आगमनं न क्षेमाय'' इति ।

अनन्तरं सः स्वस्य वृषभशकटेन श्रीशाचार्यं शान्तां च गृहं प्रापितवान् ।

पङ्काकीर्णशरीरं पतिं दृष्ट्वा पत्नी आतङ्केन पृष्टवती - ''का एषा अवस्था भवतः ?'' इति । अनन्तरक्षणे एव तस्याः मुखतः हासः अपि निर्गतः पत्युः वेषस्य दर्शनात् ।

''पादस्खलनात् पङ्के अपतम् । मम कष्टं दृष्ट्वा एषा दशवर्षीया बालिका अपि आतङ्किता जाता । भवती तु हसति !'' इति आक्षेपस्वरेण अवदत् श्रीशाचार्यः । एतत् श्रुत्वा पत्नी म्लानमुखा जाता ।

शान्ता ततः निर्गत्य गृहस्य पृष्ठतः स्थितां श्रीशाचार्यस्नुषाम् अपृच्छत् - ''किम् अहं सकृत् सुभद्रां दृष्ट्वा आगच्छानि?'' इति ।

सुभद्रा शान्तायाः सखी । सा अपि दशवर्षीया एव । शान्ता इव साऽपि अन्यगृहे कार्यं करोति ।

''किं कार्यं तत्र ?'' इति अपृच्छत् स्नुषा ।

''श्रीशाचार्यः क्षेत्रे पतितवान् यत् तत् निवेदयितुम् इच्छामि'' इति अवदत् शान्ता ।

''तदर्थं का त्वरा ? कार्याणि अत्र राशीकृतानि सन्ति । सर्वाणि कार्याणि समाप्य गच्छतु'' इति आदिष्टवती स्नुषा ।

शान्ता निराशां प्राप्य कार्ये उद्युक्ता । यदा पात्रक्षालनं वस्त्रक्षालनं च समाप्तं तावता श्रीशाचार्यपत्नी आदिष्टवती यत् शुष्क-नारिकेलानि काकेभ्यः रक्ष्यताम् इति ।

विरोधं कर्तुम् अशक्नुवती शान्ता अङ्गणे

उपविश्य काकनिवारणे अवधानं दत्तवती ।

अत्रान्तरे कस्यचित् कार्यस्य निमित्तं तस्याः पिता भीमः तत्र आगतवान् । पितरं दृष्ट्वा सा सन्तोषेण उक्तवती – ''तात ! सुभद्रां दृष्ट्वा अचिरात् एव प्रत्यागमिष्यामि'' इति । भीमः अनुमतिं दत्तवान् । ते उभे अपि कीदृशं वार्तालापं करिष्यतः इति ज्ञातुम् इच्छन् सः रहसि पुत्रीम् अनुसृतवान् ।

सुभद्रा गोष्ठे धेनुभ्यः तृणं यच्छन्ती आसीत् । यदा शान्ता धावन्ती तस्याः समीपम् आगता तदा सा क्रियमाणं कार्यं परित्यज्य अपृच्छत् – ''कः विशेषः शान्ते ?'' इति ।

''अद्य क्षेत्रे किं जातम् इति किं ज्ञायते ? अस्माकम् आचार्यः आकाशाभिमुखं पतितवान् पङ्के । हस्तौ पादौ च चालयन् सः शिशुः इव करोति स्म । पङ्कमयं तं दृष्टवत्या मया तु हासः प्राप्तः'' इति हसन्ती उक्तवती शान्ता ।

सुभद्रा अपि हसन्ती अपृच्छत् – ''सः कथं पतितः ?'' इति ।

''एवम्'' इति वदन्ती आचार्यस्य पतनम् अभिनीय दर्शितवती शान्ता ।

''आचार्यः यदा पतितः तदा वस्तुतः हासः आगतः, तथापि अहं न हसितवती । तदा हासः अनुचितः खलु ? किमपि वक्तुं हसितुं वा अस्माकं पूर्णस्वातन्त्र्यं नास्ति खलु ? अतः भवत्याः समीपम् आगत्य सर्वं निवेद्य हसनीयम् इति मम इच्छा आसीत् । किन्तु गृहे एकैका एकैकं कार्यम् अवदत् । यावत् भवतीम् उक्त्वा न हसामि तावत् मम न निश्चिन्तता इत्यतः अहम् इदानीम् अत्र आगता'' इति अवदत् शान्ता ।

''इदानीम् आतृप्ति हसतु तावत्'' इति सुभद्रा उक्तवती । ततः उभे अपि पुनः हसितवत्यौ ।

एतत्सर्वं दृष्ट्वा गृहं प्रतिगतः भीमः स्वपत्नीम् अवदत् – ''वयम् अस्मदीयानाम् अपत्यानां स्वातन्त्र्यं बाल्ये एव अपहरन्तः स्मः । श्वः आरभ्य शान्ता श्रीशाचार्यस्य गृहं प्रति न, अपि तु विद्यालयं प्रति गच्छतु । तत्र सा हास-क्रीडनाध्ययनादि-स्वातन्त्र्यस्य सुखं पूर्णतः अनुभवतु । तत् स्वातन्त्र्यं प्राप्तुं तस्याः अस्ति जन्मसिद्धः अधिकारः'' इति ।





बृहदीश्वरमन्दिरम्

# कावेरीतीरप्रयाणम् - ९
# भव्यं चोलसाम्राज्यम्

◆ *वर्णनम्* - जयन्ती महालिङ्गम्
◆ *चित्रम्* - गौतमसेनः

नवमे शतके कावेरीपरिसरे सुवर्णयुगम् आरब्धम् इति वक्तुं शक्यम् । ततः आरभ्य ४०० वर्षाणि यावत् चोलराजाः तत्र शासनं कृतवन्तः । तेषां काले तत्परिसरे सर्वत्र विशेषप्रगतिः जाता । दीर्घकालं यावत् तञ्जावूरुनगरं तेषां राजधानी आसीत् ।

चोलवंशीयेषु राजसु श्रेष्ठेषु अन्यतमः राजराजः प्रथमः । सः ९८५ तः १०१४ तमवर्षान्तं शासनं कृतवान् । बृहदीश्वरमन्दिरं तेनैव निर्मितम् । बृहदीश्वरमन्दिरम् इति तस्य देवालयस्य अन्वर्थं नाम । स्थापत्यकलायाः अनुपमम् उदाहरणम् अस्ति तत् । शङ्क्वाकारकम् अष्टकोणोपेतं केन्द्रीय-विमानं ६४ मीटर्-उन्नतम् अस्ति । तस्य छदिरूपेण ८० टन्मिता अखण्डशिला उपयुक्ता अस्ति । एषा महती शिला कथं तावत् उपरि नीता इति तु न ज्ञायते । एवं हि श्रूयते यत् तां शिलाम् उपरि नेतुं तात्कालिकी काष्ठसोपानपरम्परा निर्मिता आसीत्, यस्याश्च एका दशा मन्दिरशिखरं स्पृशति स्म, अपरा च षट्किलोमीटर्दूरे स्थिते वायलूरुग्रामे स्थिता आसीत् इति । अत्रत्ये द्वितलात्मके गर्भगृहे प्रतिष्ठापितं शिवलिङ्गं त्रिमीटर्-उन्नतम् अस्ति ।

तस्य अभिषेकार्थम् अर्चकेण निश्रेणीं अवलम्बनीया भवति । गर्भगृहस्य भित्तेः अन्तर्भागे बहिर्भागे च रमणीयाः मूर्तयः दृश्यन्ते । भगवतः शिवस्य विभिन्नानि रूपाणि, नयनार्जनानां जीवनगाथाः, भरतनाट्यस्य १०८ मुद्राश्च तासु दृश्यन्ते । मन्दिरस्य चतसृषु दिक्षु चन्द्रशाला अस्ति । सा सुन्दरैः भित्तिचित्रैः अलङ्कृता अस्ति । शिवस्य वाहनं नन्दी अन्यस्मिन् मण्डपे विराजते । नन्दिनः मूर्तिः ३.६ मीटर्-उन्नता, ६ मीटर्दीर्घा, २५ टन् भारयुता, अखण्डशिलया निर्मिता च अस्ति ।

राज्यस्य ३६० ग्रामाणां जनाः देवस्वं दत्त्वा मन्दिरनिर्वहणभारं निर्वहन्ति स्म । राजराजः प्रथमः महादातॄणां नामानि विमानभित्तौ उत्कीर्य नूतनां प्रथाम् आरब्धवान् । मूर्ति-स्वर्णाभरण-भूमिप्रभृतीनां दानं कृतवतां पञ्चशदधिकदातॄणां नामानि बृहदीश्वरमन्दिरभित्तौ शिलासु उत्कीर्णानि दृश्यन्ते । एतस्याम्


तञ्जावूरुशैल्याः एकं चित्रम्

आवल्यां राजराजप्रथमस्य, तदीयभगिन्याः कुन्दबैवर्यायाः च नाम सर्वप्राथम्येन दृश्यते ।

मन्दिरपरिसरे पेरियनायिकादेवीमन्दिरम् अपि अस्ति । एतच्च मन्दिरं पाण्ड्यराजैः निर्मितम् । अल्लावुद्दीनखिलजीसेनापतिः मलिकाफरः एतं प्रदेशं सकृत् जितवान् आसीत् । किन्तु १३७७ तमे वर्षे विजयनगरसंस्थापकस्य बुक्कस्य पुत्रः कम्पणः यवनसेनां पराजितवान् । तदनन्तरं द्विशतं वर्षाणि यावत् एतस्मिन् प्रदेशे नायकवंशीयानाम् एव शासनम् आसीत् । नायकराजाः विजयनगरसाम्राज्ये निष्ठावन्तः आसन् । ते तञ्जावूरुनगरे एकं भव्यं राजभवनं निर्मापितवन्तः । रघुनाथनायकः (१६००-१६३४ क्रि.श.) साहित्यासक्तः सङ्गीतप्रेमी च आसीत् । राजभवनस्य पुस्तकालये स्थितेषु ताडपत्रेषु स्थितान् ग्रन्थविषयान् सः एव सङ्गृहीतवान् इति श्रूयते ।

तञ्जावूरुनगरं शताधिकवर्षाणि यावत् मराठराजानां शासनाधीनम् अपि आसीत् । तत् तु आकस्मिकतया प्रवृत्तम् । विजयनगरसाम्राज्यस्य पतनस्य अनन्तरं स च प्रदेशः बिजापुरसुल्तानस्य अधीनः जातः । सः स्वस्य सामन्ताय शाहजीनामकाय उपायनरूपेण एतं प्रदेशम् अर्पितवान् । शाहजीमरणानन्तरं वेङ्कोजिनामकः (एकोजिः इति तस्य अपरं नाम) एतस्य प्रदेशस्य शासकः जातः । सः मराठावीरस्य छत्रपतिशिवाजेः विमातृपुत्रः आसीत् । यदा बिजापुरशासकाः दुर्बलाः जाताः तदा सः स्वस्य स्वातन्त्र्यम् उद्घोषितवान् । वेङ्कोजेः शिवाजेः च राज्याभिषेकः सौभाग्यवशात् एकस्मिन् एव वर्षे, तन्नाम १६७४ तमे वर्षे जातः । १८ शतकस्य अन्तिमभागे आङ्ग्लेयाः मराठाशासकाय निवृत्तिवेतनं दत्त्वा तदीयं राज्यं स्ववशं कृतवन्तः ।

मराठाशासकाः तञ्जावूरीयां समृद्धां सांस्कृतिकपरम्पराम् अनुवर्तितवन्तः । तत्रापि तुलसाजिः द्वितीयसरफोजिश्च एतत्क्षेत्रे विशेषकार्यं कृतवन्तौ । द्वितीयसरफोजिं डेनिश्धर्मगुरुः अध्यापितवान् । बाल्ये एव सः सरफोजौ पुस्तकपठनप्रवृत्तिं जागरितवान् । सरफोजिः स्वस्य वासभवने पुस्तकालयम् आरब्धवान् । देशे स्थितेभ्यः पण्डितेभ्यः ताडग्रन्थानां क्रयणार्थं, प्रतिलिपिकरणार्थं च सः पण्डितान् नियुक्तवान् आसीत् । ते देशे सञ्चारं कृत्वा एतत् कार्यं निर्वर्तयन्ति स्म । अद्य सरस्वतीग्रन्थालये संस्कृत-तेलगु-मराठी-उर्दू-फरासीप्रभृतिभाषामयाः २२,००० अमूल्यग्रन्थाः सन्ति । सरफोजिना



*तञ्जावूरुचतुष्टयस्य अङ्गभूताः त्रयः सहोदराः - पोन्नय्यः, वडिवेलुः, चिन्नय्यः च*

सङ्गृहीतानां वस्तूनां सङ्ग्रहः अपि अत्र कस्मिंश्चित् प्रकोष्ठे अस्ति । सरफोजिः स्वभवनस्य एकस्मिन् भागे अष्टाङ्गात्मकं स्तम्भं, गणेशमन्दिरं, बृहदीश्वरमन्दिरे नटराजमण्डपं च कारितवान् आसीत् ।

चोलराजाः मराठराजाः च सङ्गीतज्ञाः सङ्गीतप्रियाः वा आसन् । बहवः राजानः सङ्गीतकृतीः अपि रचितवन्तः । चोलराजस्य आस्थाने चतुश्शतं देवदास्यः भरतमुनिनाट्यशास्त्राधारितं भरतनाट्यम् ऐदम्प्राथम्येन प्रदर्शितवत्यः । एतत् नृत्यं 'सदिर आट्टम्' (दासिआट्टम् इति वा) इति निर्दिश्यते स्म । बृहदीश्वरमन्दिरे नृत्यं कुर्वतीनां देवदासीनां निमित्तं राजराजः प्रथमः मन्दिरपरिसरे गृहाणि निर्माप्य वासव्यवस्थाम् उपकल्पितवान् ।

नवदशशतकस्य आरम्भे सुप्रसिद्धाः तञ्जावूरुचतुष्टयत्वेन ख्याताः सहोदराः सदिरआट्टम्नृत्यप्रकारस्य शास्त्रीयरूपं परिकल्पितवन्तः । ते च - पोन्नय्यः, चिन्नय्यः, शिवनन्दनः, वडिवेलुः च । ते भरतनाट्यस्य कायकल्पचिकित्सां विधाय तञ्जावूरुतः सुदूरे स्थितेषु अपि प्रदेशेषु तस्य जनप्रियतां वर्धितवन्तः । कर्णाटकसङ्गीतस्य प्रसिद्धविद्वान् मुत्तुस्वामिदीक्षितः एतेषां सहोदराणां प्रारम्भशिक्षणस्य गुरुः आसीत् ।

चोलराजानां काले नृत्यसङ्गीतादयः यथा तथैव चित्रकला अपि वृद्धिं गता । तीक्ष्णरेखाभिः चित्रं निर्माय मन्दवर्णैः पूरणं, काचकैः अल्पमूल्यकरत्नैः वा अलङ्करणं,

*महाराजः द्वितीयसरफोजिः*



सुवर्णशलाकानाम् उपयोगः च तञ्जावूरु-चित्राणां वैशिष्ट्यम् । अयं क्रमः अद्यापि जनप्रियः अस्ति । कर्णाटकसङ्गीतनिपुणाः अद्यापि भावयन्ति यत् तञ्जावूरुप्रदेशे निर्मितानां वीणा-मृदङ्ग-तम्बूरादिवाद्यानां सदृशानि वाद्यानि अन्यत्र न लभ्यन्ते इति ।

कर्णाटकसङ्गीतस्य त्रयाणां प्रसिद्धविदुषां जन्म तञ्जावूरुसमीपे स्थिते तिरुवारूरुग्रामे जातम् । ते त्रयः अपि सङ्गीतदिग्गजाः त्यागराजः, मुत्तुस्वामिदीक्षितः, श्यामशास्त्री च समकालिकाः आसन् । तेषु त्यागराजस्य स्थानम् अत्युच्चम् अस्ति । तदीयं समग्रं जीवनं तिरुवय्यारुग्रामे एव यापितम् अभवत् । स च ग्रामः कावेर्याः, तदुपनदीनां च सङ्गमस्थले अस्ति । अत्रत्यस्य मन्दिरस्य मूर्तिः पञ्चनदीश्वरः इति निर्दिश्यते । प्रतिवर्षम् एप्रिल्-मे-मासयोः उत्सवमूर्तिं शिबिकायां संस्थाप्य रथयात्रां निर्वर्तयन्ति । एषा यात्रा तिरुवय्यारुतः आरब्धा भवति । ततः तिरुपाझनं, तिरुचोन्नुत्तुरै, तिरुवेणुगुडि, तिरुकरण्डयूरु, तिरुपन्तुरुती, तिल्लैस्थानम् इत्येतान् षट् ग्रामान् अपि गच्छति । यात्रायां भागं गृहीतवन्तः भक्ताः आरात्रि गायन्तः नृत्यन्ति । क्वचित् नदीतीरे सिकतासु एव शयनं कुर्वन्ति ते ।



*महाविद्वान् सङ्गीताग्रेसरः त्यागराजः*

त्यागराजः श्रीरामस्य परमभक्तः आसीत् । तेन तेलुगुभाषया संस्कृतभाषया च गीतानि रचितानि । सङ्गीतं भक्तिं च अभिन्नतया भावयन् अयं सङ्गीतसम्राट् स्वर-राग-शब्दानां समुचितमेलनेन भावगङ्गाप्रवाहम् एव वाहितवान् । तस्य अग्रजः तं निष्प्रयोजकम् अलसं च भावयति स्म । कदाचित् सः त्यागराजेन प्रतिदिनं पूज्यमानां राममूर्तिं नद्यां क्षिप्तवान् । एतेन त्यागराजः व्याकुलितः जातः । नदीतीरं गत्वा सः गायन् आराध्यदेवम् आह्वयत् - ''प्रत्यागच्छतु प्रभो, प्रत्यागच्छतु'' इति । अहो आश्चर्यम् ! राममूर्तिः नद्यां प्लवमाना त्यागराजसमीपम् आगता !

अद्यापि सा एव मूर्तिः त्यागराजस्मारकस्य पार्श्वे एव अस्ति इति श्रूयते । एतत् स्मारकं कावेरीनदीतीरे तिरुवाय्यारुग्रामे निर्मितम् अस्ति । प्रसिद्धा गायिका बेङ्गलूरुनागरत्नम्मा १९२० तमे वर्षे तस्य शिथिलताम् अपनीय परिष्कारितवती । प्रतिवर्षं जनवरीमासे सहस्रशः कर्णाटकसङ्गीतासक्ताः तत्र सम्मिलिताः सन्तः महासङ्गीतकारस्य आराधनोत्सवे भागं वहन्ति । त्यागराजमूर्तिं यथाविधि अभिषिच्य पूजयन्ति । देशस्य प्रसिद्धाः गायकाः वाद्यवादकाः च तेन रचितानि 'पञ्चरत्नकीर्तनानि' गायन्ति । तस्मिन् काले कावेरी जलसमृद्ध्या युक्ता भवति । कावेरीलहर्याः कलकलनिनादः सङ्गीस्वराणाम् आरोहावरोहाः च परस्परं सम्मिलिताः सन्तः गायकान् श्रोतॄन् च अलौकिके आनन्दसागरे निमज्जयन्ति ।



# अन्यथाभावः

मेधापुरनामके ग्रामे उदयः नाम कश्चन युवकः वणिक् आसीत् । वाणिज्य-प्रतिभा, परिश्रमशीलता, दूरदर्शिता च तस्मिन् विशेषतः आसीत् । अतः तदीयं वाणिज्यं दिने दिने वर्धते स्म । अतः पञ्चविंशतितमे वयसि एव सः ग्रामस्य प्रमुखवणिक् जातः । पुत्रस्य प्रगतिं दृष्ट्वा तदीयौ मातापितरौ अपि सन्तुष्टौ ।

एकदा पिता उदयम् अवदत् - ''पुत्र ! वाणिज्ये व्यग्रः भवान् अद्यावधि विवाह-प्रस्तावम् अग्रे सारयन् आसीत् । इदानीं तु वाणिज्ये स्थिरता आगता अस्ति । भार्गवं प्रति किमपि उत्तरं वक्तव्यं खलु अस्माभिः ? यदि वयं सूचयेम तर्हि विवाहनिश्चयार्थं ते आगच्छेयुः'' इति ।

भार्गवस्य उदयपरिवारस्य च वाणिज्य-व्यवहारस्य कारणतः मैत्री आसीत् । भार्गवस्य पुत्री अरुणा उदयात् पञ्चवर्षेभ्यः कनीयसी । उदयारुणयोः विशेषपरिचयः यद्यपि न आसीत्, तथापि परिचिताः चिन्तयन्ति स्म यत् एतौ अचिराद् एव पतिपत्न्यौ भविष्यतः इति ।

भार्गवविषये उदयस्य आदरः आसीत् । यतः आ बाल्यात् परिचयः आसीत् तस्य । भार्गवः विनोदशीलः आसीत् । अतः सर्वे बालाः तं विशेषतः इच्छन्ति स्म । भार्गवस्य कृषिभूमिः अपि विशाला आसीत् । ग्रामस्य प्रमुखः अपि आसीत् सः ।

''भवन्तः यथा इच्छन्ति तथा'' इति वदन् उदयः विवाहप्रस्तावस्य सम्मतिं सूचितवान् । एतेन सन्तुष्टौ तदीयौ मातापितरौ भार्गवं प्रति वार्तां प्रेषितवन्तौ ।

किन्तु एतां वार्तां श्रुतवती अरुणा मातरम् उक्तवती यत् अहम् उदयं न परिणेष्यामि इति । मात्रा कारणं पृष्टा सा अवदत् - ''पञ्चभ्यः वर्षेभ्यः पूर्वं यदा सः अत्र आगतः आसीत्

'सुभद्रा'



तदा अहं तं ग्रामं दर्शयितुं नीतवती । तत्समये सः 'वाचालतया मां मा पीडयतु रे' इति उक्तवान् । तादृशं गर्वपिण्डम् अहं सर्वथा न परिणेष्यामि'' इति ।

तदा तस्याः माता हसन्ती उक्तवती - ''कदाचित् सः किञ्चित् कोपं दर्शितवान् स्यात् । किन्तु किं तेनैव कारणेन विवाहः निराक्रियते ? उत्तमः बुद्धिमान् धनसम्पन्नः तरुणः सः । तस्य परिणयतः भवत्याः जीवनं सुखमयं भविष्यति'' इति ।

''अम्ब ! तस्मिन् मम अनुरागः सर्वथा नास्ति । अतः तं परिणेतुं न इच्छामि अहम् । भवती एतद्विषये अनुरोधं मा करोतु'' इति उक्तवती अरुणा ।

पत्न्याः मुखतः अरुणायाः आशयं ज्ञात्वा भार्गवः हसन् अवदत् - ''एषा काचित् अल्पा समस्या । विवाहतः पूर्वं त्रिचतुराणि दिनानि तौ यदि सहैव वासं कुरुतः तर्हि सर्वं सम्यक् भविष्यति'' इति ।

ततः सः उदयस्य पित्रे सन्देशं प्रेषितवान् ''कन्यादर्शनार्थं वरपक्षीयाः आगच्छन्ति इति तु सम्प्रदायः । किन्तु अरुणा न अदृष्टपूर्वा । अतः वधूदर्शनकार्यक्रमादिकं नितरां कृत्रिमं स्यात् । अतः विवाहप्रस्तावं कमपि अविसूच्य उदयः कदाचित् अत्र प्रेषणीयः इति वयं प्रार्थयामः । तस्य दर्शनानन्तरं चिरकालः अतीतः । तद्दर्शनकुतूहलिनः स्मः वयम्'' इति ।

एतां वार्तां प्राप्य उदयस्य पिता तम् आहूय असूचयत् - ''घनपुरे निर्मिताः कौशेय-शाटिकाः सुप्रसिद्धाः । अत्र नगरे तस्य मूल्यम् अधिकम् । घनपुरम् एव गतं चेत् अल्पमूल्येन ताः क्रेतुं शक्याः । विविधाः प्रकाराः अपि तत्र प्राप्यन्ते । एतस्मिन् कार्ये भार्गवः भवतः साहाय्यं करिष्यति । भार्गवगृहे एव वासं कृत्वा कार्यं साधयितुम् अर्हति अपि भवान्'' इति ।

उदयः रात्रौ भोजनं समाप्य अश्वशकटम् आरुह्य घनपुरं प्रति प्रस्थितवान् । अनन्तरदिने प्रातः सः भार्गवस्य गृहस्य पुरतः उपस्थितः ।

तस्मिन् समये अरुणा अङ्गणे रङ्गवल्लीं लिखन्ती आसीत् । तस्याः माता पार्श्वे स्थित्वा पुत्र्याः कौशलं सन्तोषेण परिशीलयन्ती आसीत् ।

उदयस्य दृष्टिः अरुणायां पतिता । तस्याः सौन्दर्यं सः निर्निमेषदृष्ट्या पश्यन् स्थितवान् ।

अरुणा अपि तं दृष्टवती । सा झटिति उत्थाय लज्जया अन्तः धावितवती । उदयस्य नेत्रयोः पुरतः शून्यता ।

तावता अरुणायाः माता तम् अभिज्ञाय सन्तोषेण अवदत् - ''अये उदय ! आगच्छतु अन्तः । एषा भवता दृष्टा न अन्या, अस्माकं पुत्री अरुणा एव । पञ्चभ्यः वर्षेभ्यः पूर्वं दृष्टा आसीत् खलु सा ! तदा सा बालिका आसीत् । इदानीं प्रवृद्धा सा'' इति ।



यावत् उदयः अन्तः आगतः तावता भार्गवः कोपेन पत्नीम् अवदत् - ''प्रातः एव कः कोलाहलः भवत्याः ? उदयः आकाशतः न पतितः खलु ? आगतः सः द्वित्राणि दिनानि तिष्ठेत् एव । अल्पस्य एतस्य विषयस्य निमित्तं मम निद्रा किमर्थं नाशिता भवत्या ?'' इति ।

एतत् श्रुतवतः उदयस्य उत्साहः झटिति नष्टः । सः चिन्तितवान् यत् मम आगमनं न भार्गवस्य प्रियं न जातम् इति । किन्तु किञ्चित्कालानन्तरं यदा सः उत्थाय आगत्य प्रीत्या कुशलादिकं विचार्य सम्भाषणम् अकोरत् तदा किञ्चिदिव सन्तुष्टः अभवत् उदयः । तथापि मनसः कोणे असन्तोषः कश्चन आसीत् एव । ततः सः स्वस्य आगमनोद्देशम् अवदत् । तदा भार्गवः चिन्तितवान् - 'वास्तविकं कारणम् अवदता एतस्य पित्रा युक्तम् एव आचरितम्' इति ।

सः उदयम् अवदत् - ''एतद्विषये मया एव आगन्तव्यम् इति नास्ति । अरुणा अपि भवान् इव व्यवहारचतुरा अस्ति । सा अत्रत्यान् सर्वान् तन्तुवायान् वस्त्रवैविध्यानि च जानाति । ताम् अपि सर्वे जानन्ति । अतः तया सह गतं चेत् भवतः इष्टं क्लेशं विना सिद्धं भविष्यति'' इति ।

उदयः स्नानादिकं समाप्य उपाहारार्थम् उपविष्टवान् । तदा भार्गवः पुत्रीम् उद्दिश्य - ''वत्से ! उदयः शाटिकाः क्रेतुम् इच्छति । तं तन्तुवायानां गृहं नयतु । शाटिकाक्रयणे तस्य साहाय्यं करोतु । ग्रामसमस्यानां निवारणार्थं मया कुत्रचित् गन्तव्यम् अस्ति । एषोऽहम् आगच्छामि'' इति उक्त्वा ततः निर्गतवान् ।

यावत् उदयस्य उपाहारः समाप्तः तावता अरुणा अपि सन्नद्धा जाता । प्रस्थानसमये सा पृष्टवती - ''कीदृशग्राहकाणां निमित्तं शाटिकाः क्रेतव्याः भवता ?'' इति ।



उभयत्र अपि परिवर्तनम् अस्ति । अरुणा सुन्दरी तरुणी सती औचित्यविषये अवधानवती अस्ति । उदये अपि व्यवहारगाम्भीर्यम् आगतम् अस्ति । पूर्वं यत् चित्रं मनसि आसीत् तस्य परिवर्तनार्थम् उभौ अपि विशेषतः प्रयतमानौ आस्ताम् ।

''एतस्मिन् ग्रामे शुद्धकौशेयशाटिकाः अपि लभ्यन्ते, उत सर्वाः कृत्रिमकौशेयमय्यः ?'' इति अपृच्छत् उदयः । यद्यपि एतत् सर्वं विवरणं सः जानाति स्म एव, तथापि वार्तालापस्य अनुवर्तनार्थं सः तथा अपृच्छत् ।

''अस्माकं ग्रामे पञ्चाशत् तन्तुवायाः स्युः । तेषु पञ्च एव शुद्धकौशेयशाटिकानिर्मातारः । तेषां शाटिकाः देशे सर्वत्र, विदेशान् प्रति च गच्छन्ति'' इति उत्तरं दत्तवती अरुणा ।

एतादृशं वार्तालापं कुर्वन्तौ तौ दीर्घकालं यावत् गृहे एव स्थितवन्तौ । बहिः न गतौ एव ।

अनन्तरदिने प्रातः कश्चन कृषिकः भार्गवं नेतुम् आगतवान् । तत्समये भार्गवः न उत्थितः आसीत् । अरुणा तं कृषिकं सूचितवती - ''पिता निद्रामग्नः अस्ति । भवान् एव तम् उत्थापयतु'' इति । कृषिकः यदा तम् उत्थापितवान् तदा भार्गवः तं सम्यक् निन्दितवान् । ततः अल्पे एव काले तेन सह निर्गतवान् सः ।

उपाहारादिकं समाप्य अरुणा उदयः च गृहात् निर्गतवन्तौ । किन्तु तौ शाटिकादर्शनार्थं तु न गतौ । अरुणा तस्मै मन्दिराणि

''ग्राहकाः विविधाः भवन्ति । तेषां निमित्तं मया शाटिकाः क्रेतव्याः'' इति अवदत् उदयः ।

''तत् तु सत्यम् । तथापि तेषाम् आर्थिकस्तरः खलु मनसि स्थापनीयः ? निर्धनाः क्रीणन्ति, उत मध्यमवर्गीयाः क्रीणन्ति, उताहो धनिकाः इति निश्चित्यैव शाटिकाः नेतव्याः'' इति अवदत् अरुणा ।

''वाणिज्यस्य सूक्ष्मांशान् अपि जानाति भवती'' इति साभिमानम् अवदत् उदयः ।

तयोः पूर्वतनस्य मेलनस्य अनन्तरं पञ्च वर्षाणि अतीतानि आसन् । तत्काले अरुणा बालिका आसीत् । तस्याः व्यवहारे चाञ्चल्यं दृश्यते स्म । उदयः अपि धाष्टर्यवान् कोपशीलः च आसीत् । किन्तु इदानीम्

दर्शितवती, नदीं दर्शितवती, प्रकृतिसौन्दर्यं दर्शितवती । अन्यान् अपि ग्रामविशेषान् दर्शितवती । उदयः अरुणायाः सौन्दर्यं दृष्ट्वा यथा, तस्याः व्यवहारम् उत्साहं च दृष्ट्वा अपि नितरां व्यामुग्धः । सायं तौ गृहं प्रत्यागतवन्तौ ।

अरुणायाः माता उदयं पृष्टवती - ''अरुणा किम् अरोचत भवते ?'' इति ।

लज्जाकारणतः उदयः तां किमपि न उक्तवान् ।

अनन्तरं सा पुत्रीम् अपि एकान्ते पृष्टवती - ''किम् उदयः भवत्याः इष्टाय जातः ?'' इति ।

अरुणा किमपि उत्तरं न उक्तवती । तस्याः मनः तु वदति स्म - 'उदयः यद्यपि मम प्रियः जातः, तथापि पञ्चभ्यः वर्षेभ्यः पूर्वं दृष्टा तदीया रूक्षव्यवहाररूपा मूर्तिः अद्यापि मनस्तः न निर्गता' इति ।

रात्रौ यदा सर्वे भोजनार्थम् उपविष्टाः आसन् तदा भरतः नाम कश्चन कृषिकः आगत्य भार्गवम् अवदत् - ''श्वः प्रातः कूपखननार्थं भवता मुहूर्तः सूचितः अस्ति । मुहूर्तकाले भवता अवश्यम् उपस्थातव्यम्'' इति ।

''मुहूर्तस्तु उषसि एव अस्ति इति मम स्मरणम् । उषसि उत्थानं मम क्लेशाय । अतः मुहूर्तकाले अहम् उपस्थातुं न शक्नोमि । मया न उपस्थितं चेदपि कार्यं तु सिद्ध्येत् एव । अतः श्वस्तनमुहूर्ते कार्यं निर्वर्तयतु भवान्'' इति अवदत् भार्गवः ।

''एवं तर्हि भवतः यदा समयः तदा मया



मुहूर्तः निश्चेतव्यः भवेत् । यतः मुहूर्तकाले भवतः उपस्थितिः भवेत् एव । भवान् पूज्यः । भवतः आशीर्वादं विना इतःपूर्वं मया किमपि कार्यं न कृतम्, अग्रे अपि न करिष्यते । एतत् अपि कार्यं भवतः आशीर्वादं विना अहम् आरब्धुं सर्वथा न इच्छामि'' इति अवदत् भरतः ।

''किं मम निमित्तं मुहूर्तान्तरस्य अन्वेषणम् ? अहं तु अल्पः । वस्तुतः मुहूर्ताः अस्माकं समयावकाशं मनसि निधाय न प्राप्यन्ते । यदा मुहूर्तः प्राप्यते तदा मानवैः अस्माभिः समञ्जनं करणीयम् । यः एवं न करोति सः असज्जनः भवेत् । अहं तु तादृशः भवितुं न इच्छामि । अतः मुहूर्तान्तरस्य अन्वेषणं सर्वथा न आवश्यकम् । अहं श्वः

एव आगमिष्यामि । प्रातः माम् उत्थापयितुं कमपि प्रेषयतु भवान्'' इति असूचयत् भार्गवः ।

''कस्यचित् प्रेषणेन किम् ? अहं स्वयम् आगत्य भवन्तम् उत्थाप्य नेष्यामि । भवतः उपस्थितिः अत्यावश्यकी मम'' इति उक्त्वा ततः निर्गतवान् भरतः ।

तदा उदयः भार्गवम् अपृच्छत् आश्चर्येण - ''प्रातःकाले कोऽपि भवतः निद्राभङ्गं करोति चेत् भवान् तद्विषये कुपितः भवति । एवं स्थिते अपि भवता भरतः किमर्थम् आहूतः ? अनन्तरकाले कदाचित् आगच्छतु इति सूचयितुं शक्यम् आसीत् खलु भवता !'' इति ।

एतत् श्रुत्वा भार्गवः उच्चैः हसन् अवदत् - ''प्रातः उत्थाय कस्यापि विषये कोपः न प्रदर्श्यते चेत् आदिनम् अहं निरुत्साही भविष्यामि । अतः उत्थानसमनन्तरमेव कोपं प्रदर्श्य आत्मनः समस्थितिं रक्षामि । किन्तु अहम् एकस्मिन् एव जने सर्वदा कोपं दर्शयितुं न शक्नोमि । अतः कोपप्रदर्शनार्थं प्रतिदिनम् एकैकं नूतनं प्राप्तुं प्रयत्नं करोमि । श्वः भरतः आगमिष्यति । तस्यापि इष्टं सिद्धं भविष्यति, ममापि'' इति ।

तदा उदयः अवदत् - ''कोपप्रदर्शनम् अपि भवतः दिनचर्यायाः एकम् अनिवार्यम् अङ्गम् इति अद्य मया ज्ञातम् । पूर्वं तु अहम् एतद्विषये अन्यथाभावं प्राप्तवान् आसम्'' इति ।

''केचन बाह्यरूपेण यथा दृश्यन्ते तथा न भवन्ति आन्तरङ्गिकतया । दुष्टाः रूक्षाः इव दृश्यमानाः अपि वस्तुतः केचन शिष्टाः सौम्याः सद्भावपूर्णाः च भवन्ति । अतः बाह्यरूपम् एव परमप्रमाणं न'' इति उक्तवान् भार्गवः ।

एतत् श्रुतवत्याः अरुणायाः मनसि उदयविषयकः भावः पूर्णतः परिवृत्तः । उदये अपि तथैव । तस्मिन् एव दिने तौ मातरम् उक्तवन्तौ - ''आवां विवाहार्थं सन्नद्धौ स्वः'' इति ।



## ५३. युद्धस्य पूर्वदिने...

# महाभारतम्

युद्धस्य पूर्वतनं दिनं तत् । अनन्तरदिने प्रलयकारि महायुद्धं निश्चितम् आसीत् । महावीराणाम् अपि शलभत्वस्य कल्पकं तत् युद्धम् ।

तस्यां रात्रौ दुर्योधनः स्वसेनाप्रमुखान् आहूय अपृच्छत् - ''पाण्डवानां विनाशार्थं कति दिनानि अपेक्षितानि भवेयुः ?'' इति ।

भीष्मः उक्तवान् यत् पाण्डवानां नाशनार्थं मासात्मकः कालः तु आवश्यकः एव इति । द्रोणः अपि एतम् एव आशयं प्रकटितवान् । कृपाचार्यः अवदत् - 'पाण्डवानां संहारार्थं मासद्वयात्मकः कालः अपेक्षितः' इति । 'दशदिनाभ्यन्तरे सर्वान् पाण्डवान् मृत्युलोकस्य अतिथीन् करिष्यामि' इति अवदत् अश्वत्थामा । कर्णः अवदत् - ''पाण्डवानां संहारार्थं मह्यं पञ्च अपि दिनानि न आवश्यकानि'' इति ।

तत् श्रुत्वा भीष्मः हसन् अवदत् - ''यावत् कृष्णसहितः अर्जुनः अभिमुखम् उपस्थितः न भवति तत् भवतः एतत् प्रजल्पनं प्रचलेत् । तयोः उपस्थितयोः तु भवतः वास्तविकं रूपं सर्वैः ज्ञातं भविष्यति । अतः तावत् प्रचलतु नाम भवतः इयम् आत्मप्रशंसा'' इति ।

गुप्तचराणां द्वारा एतस्याः चर्चायाः वार्ता





यदा ज्ञाता तदा धर्मराजः अर्जुनम् आहूय अपृच्छत् - ''कौरवसेनां समूलं विनाशयितुं भवते कति दिनानि अपेक्षितानि ?'' इति ।

तदा अर्जुनः अवदत् - ''अग्रज ! अलं चिन्तया । अस्मत्पक्षस्य विजयः सुनिश्चितः । यदि त्रिलोकी अपि अस्मच्छत्रुपक्षस्य समर्थनं कुर्यात् तर्हि अपि जयः अस्माकम् एव स्यात् । यतः भीष्म-द्रोण-कृपाचार्य-कर्णादीनां समीपे अपि यत् अस्त्रं नास्ति तत् पाशुपतास्त्रम् अस्मत्समीपे अस्ति'' इति ।

अनन्तरदिने प्रातः कौरवाणां पाण्डवानां च सेना समुद्रस्य तरङ्गाः इव रणक्षेत्रम् आगच्छत् । दुर्योधनपक्षीयाणां सर्वेषां मुखे विजयगर्वः दृश्यते स्म ।

प्रपञ्चे स्थिताः सर्वे युवकाः अन्यतरपक्षे योद्धृत्वेन भागं गृहीतवन्तः आसन् । वृद्धास्वस्थादयः गृहे अतिष्ठन् ।

युद्धप्रारम्भात् पूर्वं व्यासमुनिः धृतराष्ट्र-समीपम् आगत्य अवदत् - ''भवतः पुत्राणां, तत्समर्थकराजानां च विनाशकालः सन्निहितः अस्ति । विधिनिर्णयं परिवर्तयितुं कोऽपि न शक्नोति । यदि भवान् युद्धदृश्यं द्रष्टुम् इच्छेत् तर्हि अहं भवते दिव्यां दृष्टिं दद्याम् । एतस्य साहाय्येन भवान् युद्धस्य सर्वाणि दृश्यानि प्रत्यक्षतया द्रष्टुं शक्तः भविष्यति'' इति ।

तदा धृतराष्ट्रः अवदत् - ''पुत्राणां बन्धूनां च मरणस्य प्रत्यक्षदर्शनं महते क्लेशाय । तथापि युद्धस्य समग्रं विवरणं ज्ञातुं मम महत् कुतूहलम् अस्ति एव । अतः एतदर्थं कमपि उपायं सूचयतु कृपया'' इति ।

''अहं सञ्जयाय दिव्यदृष्टिं दास्यामि । सः कुरुक्षेत्रस्य सर्वाणि दृश्यानि द्रष्टुं शक्ष्यति । दृष्टं सर्वं भवते निवेदयिष्यति च'' इति अवदत् व्यासमहर्षिः ।

एतदनन्तरं सः सञ्जयाय दिव्यदृष्टिम् अयच्छत् । सञ्जयः सर्वं विवरणं ज्ञात्वा धृतराष्ट्राय निवेदितवान् ।

युद्धप्रारम्भात् पूर्वं कौरवसेनायाः प्रधान-सेनापतिः भीष्मः सर्वान् योद्धॄन् सम्बोध्य अवदत् - ''राजानः शूराः च ! एतत् युद्धं वीराणां स्वर्गद्वारायते । एतत् द्वारीकृत्य इन्द्रलोकः ब्रह्मलोकः च प्राप्तुं शक्यः । क्षत्रियाणां धर्मः भवति युद्धम् । शौर्येण युद्धं कृत्वा प्राप्तं मरणम् अपि क्षत्रियस्य प्रियम् एव भवति । अतः सर्वे निर्भयाः सन्तः युद्धं कुर्वन्तु भवन्तः'' इति ।

कर्णः प्रतिज्ञां कृतवान् आसीत् यत् यावत् भीष्मः रणरङ्गे भविष्यति तावत् अहं शस्त्रं न ग्रहीष्यामि इति । अतः तस्मात् ऋते सर्वे योद्धारः रणघोषं कुर्वन्तः अग्रे गतवन्तः ।

पक्षद्वये अपि सेनायाः व्यूहः रचितः आसीत् । भीमः पाण्डवसेनायाः नेतृत्वं वहति स्म । शिखण्डिसेना व्यूहस्य मध्यभागे आसीत् । व्यूहस्य दक्षिणभागस्य रक्षणभारं सात्यकिः स्वीकृतवान् आसीत् । धृष्टद्युम्नः व्यूहस्य समग्रपर्यवेक्षणं कुर्वन् आसीत् ।

उभयोः सेनयोः मध्ये अर्जुनसारथिः श्रीकृष्णः रथं स्थगयित्वा अर्जुनम् अवदत् - "अर्जुन ! शत्रुपक्षे द्रोणभीष्मादयः महारथाः सन्ति । केन सह युद्धं कर्तुम् इच्छति भवान् ? पश्यतु तावत्" इति ।



अर्जुनः शत्रुपक्षे स्थितान् गुरून्, पितामह-पितृव्य-मातुलादीन्, भ्रातृ-भागिनेयादीन् च दृष्टवान् । एतेषां मारणसम्भावना एव तस्मिन् भीतिम् अजनयत् । तस्य शरीरं कम्पमानं जातम् । हस्ततः गाण्डीवम् अपतत् । तदीये मुखे विषादच्छाया प्रसृता ।

सः श्रीकृष्णम् अवदत् - "अस्मद्वंशीयान् परिवारजनान् च नाशयित्वा यत् सुखं प्राप्येत तत् कथं वा प्रियं भवेत् ? बान्धवानां संहारः कथं वा औचित्यम् आवहेत् ? रक्तदिग्धं सिंहासनं राज्यसुखं वा सर्वथा न आवश्यकं मम । अहम् एतान् मारयितुं न इच्छामि । अतः अहं युद्धं न करिष्यामि" इति ।

तदा श्रीकृष्णः अर्जुनं युद्धे प्रवर्तयितुम् अवदत् - "अर्जुन ! युद्धभूमौ किम् एतत् अनुचितं क्लैब्यं भवतः ? क्षत्रियधर्मविरुद्धा कापुरुषप्रवृत्तिः वीरस्य भवतः शोभावहा न । युद्धभूमितः पलायनात् कीदृशम् अपयशः प्राप्यते इति किं कदापि चिन्तितं भवता ? जनाः भवन्तं किं भीरुं न वदेयुः ?

युद्धम् एव क्षत्रियस्य परमो धर्मः । यदि स च धर्मः भवता न पाल्यते तर्हि इहलोके भवतः अपकीर्तिः, परलोके च असद्गतिः । क्षत्रियस्य अपकीर्तिः मरणसमाना ।

परिवारजनानां संहारः कथम् औचित्यम् आवहति इति खलु भवतः प्रश्नः ? विवेकिनः मरणविषये चिन्तां न कुर्वन्ति । यतः ते जानन्ति यत् आत्मानः मरणं न भवति इति । आत्मा शाश्वतः मरणरहितः च । यथा वयं मलिनं प्राचीनं वस्त्रम् अपनीय नूतनं वस्त्रं धरामः तथा आत्मा जीर्णं शरीरं परित्यज्य



पादाभ्यां भीष्मम् उद्दिश्य अगच्छत् । अर्जुनः, अन्ये पाण्डवाः च तम् अनुसृतवन्तः । कृष्णः अपि तान् अनुसृतवान् ।

गमनसमये अर्जुनादयः युधिष्ठिरं पृष्टवन्तः - ''अग्रज ! निरायुधः सन् भवान् किमर्थं शत्रुसेनायाः दिशि गच्छन् अस्ति ?'' इति । किन्तु युधिष्ठिरः किमपि उत्तरम् न दत्तवान् ।

तदा श्रीकृष्णः तेषां सन्देहं निवारयन् अवदत् - ''भीष्मस्य, द्रोणस्य, कृपाचार्यस्य, शल्यस्य च अनुज्ञाम् आशीर्वादं च प्राप्तुं युधिष्ठिरः गच्छन् अस्ति । गुरुजनानाम् आशीर्वादः एव विजयहेतुः'' इति ।

कौरवसैनिकाः भावितवन्तः यत् युद्धात् भीतः सन् युधिष्ठिरः भ्रातृभिः सह आगत्य भीष्मं शरणं गच्छन् अस्ति इति । अतः ते परस्परम् उक्तवन्तः - ''धिक् पाण्डवान् ! ते वास्तविकक्षत्रियाः न । वीरकुले जन्म प्राप्य अपि ते, युद्धे उपस्थिते, मरणात् भीताः जाताः । तत्कारणतः युद्धं विनैव दुर्योधनः विजयी भविष्यति'' इति ।

पाण्डवसेनायाम् अपि एतत् कुतूहलम् आसीत् यत् धर्मराजः भीष्मं किं वदेत्, भीष्मश्च किम् उत्तरं वदेत् इति ।

'धर्मराज-भीष्मयोः सम्भाषणतः अर्जुन-श्रीकृष्णयोः विषये कः परिणामः भवेत् ? युद्धवार्ताश्रवणतः एव रोमाञ्चनं प्राप्नुवन् भीमः एतस्मिन् विषये कां प्रतिक्रियां दर्शयेत् ?' इत्यादीन् विषयान् ज्ञातुं पक्षद्वये अपि महत् कुतूहलम् आसीत् ।

धर्मराजः शत्रुसेनां प्रविश्य पितामहसमीपं गत्वा अवदत् - ''पितामह ! युद्धे भवतः

नूतनं शरीरं प्राप्नोति । अतः मृत्युविषये विशेषचिन्ताकरणं व्यर्थम् ।

भवता जीवन-मरणयोः, सुख-दुःखयोः, लाभ-हान्योः, जय-पराजययोः च भावनाम् अतीत्य स्वकर्तव्यरूपः क्षत्रियधर्मः पालनीयः । यदि भवान् युद्धे जयं प्राप्नुयात् तर्हि राज्यसुखं प्राप्यते । यदि युद्धे मरणं भवेत् तर्हि स्वर्गसुखं प्राप्यते । अतः युद्धात् एव श्रेयः । रणरङ्गात् प्रतिगमनं हानये । अतः उत्तिष्ठतु अर्जुन ! वीराणां कर्तव्यरूपं धर्मं पालयतु च'' इति ।

श्रीकृष्णस्य उपदेशस्य श्रवणतः अर्जुनस्य विषादः अपगतः । सः युद्धाय सन्नद्धः जातः ।

अत्रान्तरे धर्मराजः स्वस्य कवचम् अस्त्र-शस्त्रादिकं च अपनीय रथात् अपि अवतीर्य



सम्मुखीकरणं दुस्साहसपूर्णं कार्यम् । अतः युद्धार्थं भवतः अनुमतिम् आशीर्वादं च प्राप्तुं वयम् आगताः'' इति ।

तदा भीष्मः युधिष्ठिरस्य व्यवहारस्य विषये सन्तोषं प्रकटयन् अवदत् - ''युधिष्ठिर ! भवतः एतेन व्यवहारेण अहं नितरां सन्तुष्टः । युद्धार्थं मम अनुमतिः आशीर्वादः च अस्ति एव । वरः कोऽपि पृष्टः चेत् तमपि पूरयिष्यामि । धनं मानवं दासं करोति । अतः अनन्यगतिकतया अहं कौरवपक्षीयः सन् युद्धं कुर्वन् अस्मि । एतस्य कर्तव्यस्य निर्वहणे विघ्नः यथा न भवेत् तथा वरं कमपि प्रार्थयितुम् अर्हति भवान्'' इति ।

''पृथिव्यां काऽपि शक्तिः भवन्तं जेतुं न अर्हति । यदि अस्माकम् एव विजयः भवता इष्यते तर्हि स्वस्य पराजयस्य हेतुः भवता वक्तव्यः'' इति प्रार्थितवान् युधिष्ठिरः ।

''युद्धे मम पराजयः कथं भवेत् इति अहम् एव न जानामि । युद्धसमये मृत्युः न भविष्यति मम । यतः तादृशं मरणं मम ललाटे न लिखितम् । अतः एतद्विषये भवता अहं पुनः कदाचित् द्रष्टव्यः'' इति अवदत् भीष्मः ।

एतदनन्तरं धर्मराजः भीष्मस्य अनुज्ञां प्राप्य द्रोणाचार्यस्य समीपं गत्वा निवेदितवान् - ''आचार्यवर्य ! युद्धार्थम् अनुमतिम् आशीर्वादं च प्राप्तुम् आगतः अस्मि'' इति ।

तदा द्रोणाचार्यः अवदत् - ''युद्धनिश्चयात् पूर्वम् एव भवता मत्समीपम् आगन्तव्यम् आसीत् । एतद्विषये मम असन्तोषः आसीत् अपि । किन्तु इदानीम् उपस्थाय भवान् मम सन्तोषं जनितवान् अस्ति । विजयोऽस्तु भवतः । मया पूरणीया अपेक्षा काऽपि अस्ति चेत् वदतु । कौरवैः दत्तम् अन्नं खादितं मया । अतः कौरवपक्षं तु त्यक्तुं न शक्नोमि । तदन्यं कमपि वरं याचितुम् अर्हति भवान्'' इति ।

''युद्धे भवन्तं पराजेतुं कोऽपि न शक्नोति । अतः स्वपराजयमर्म भवान् एव कथयतु । तदा एव वयं विजयिनः स्याम'' इति विनयेन अवदत् धर्मराजः ।

''यावत् अहं युद्धरतः भविष्यामि तावत् भवतः विजयः असम्भवः । अतः यावच्छीघ्रं मृत्युः यथा माम् आलिङ्गेत् तथा करोतु भवान्'' इति अवदत् द्रोणः ।

''भवान् अजेयः । भवन्तं को वा मारयितुं शक्नुयात् ? भवतः मृत्युरहस्यम् एव खलु ज्ञातुम् इच्छामि ?'' इति अवदत् युधिष्ठिरः ।

''यावत् अहं शस्त्रहस्तः भवामि, यावत् अहं युद्धं कुर्वन् भवामि तावत् मां पराजेतुं मारयितुं वा कोऽपि न शक्नोति । किन्तु यदि अप्रिया काचित् घोरवार्ता मम कर्णपथम् आगच्छेत्, यदि च सा विश्वासार्हव्यक्त्या एव उक्ता स्यात् तर्हि तस्याः श्रवणतः अहं शास्त्रत्यागं करिष्यामि । तदा कोऽपि मां मारयितुं शक्नुयात्'' इति अवदत् द्रोणः ।

धर्मराजः द्रोणाचार्यस्य आशीर्वादं प्राप्य कृपाचार्यसमीपं गतः । कृपाचार्यः अपि पाण्डवानां विजयम् आश्वास्य अवदत् - ''अहं युद्धभूमौ केनापि पराजितः न भविष्यामि, केनापि संहृतः वा । तथापि विजयः भवतः एव । अतः निश्चिन्ततया प्रतिगत्य युद्धे प्रवृत्तः भवतु भवान्'' इति ।

तदनन्तरं धर्मराजः शल्यस्यापि अनुमतिम् आशीर्वादं च प्राप्तवान् । शल्यः अपि अनुमतिम् आशीर्वादं च दत्त्वा अवदत् - ''मत्तः किमपि साहाय्यम् अपेक्ष्यते चेत् वदतु'' इति ।

''कर्णवधे भवतः साहाय्यम् अपेक्ष्यते'' इति अवदत् धर्मराजः ।

''तच्च साहाय्यं प्राप्यते भवता । जयोऽस्तु भवतः'' इति उक्तवान् शल्यः ।

यदा सर्वे पाण्डवाः गुरुजनानाम् आशीर्वादं प्राप्य प्रतिगताः तदा श्रीकृष्णः कर्णम् अवदत् - ''यावत् भीष्मपितामहः रणरङ्गे भवति तावत् भवान् कौरवपक्षीयत्वेन युद्धं न करिष्यति । एवं तर्हि तदवधि भवान् पाण्डवपक्षीयः सन् युद्धं करोतु । ततः कौरवपक्षं प्रविशतु'' इति ।

''मया दुर्योधनाय वचनं दत्तम् अस्ति यत् कस्मिंश्चिदपि काले भवद्विरुद्धं किमपि न क्रियते इति । अतः भवतः प्रस्तावः मम न सम्मतः'' इति उक्तवान् कर्णः ।

अनन्तरं धर्मराजः उभयोः सेनयोः मध्ये स्थित्वा कौरवसेनाम् उद्दिश्य अघोषयत् - ''अद्यापि कोऽपि यदि सत्यधर्मन्यायानां रक्षणार्थम् अस्मत्पक्षम् आगन्तुम् इच्छति तर्हि तस्य स्वागतम् व्याहरामः'' इति ।

तदा दुर्योधनस्य अनुजः युयुत्सुः पाण्डव-पक्षप्रवेशस्य अपेक्षां प्रकटितवान् । धर्मराजः तस्य प्रवेशम् अनुमतवान् ।

तदनन्तरं शङ्खाः भेर्यः च नादम् अकुर्वन् । प्रलयकारि महाभारतयुद्धं ततः आरब्धम् ।





# महापण्डितः

चक्रधरपुरे चक्रपाणिः नाम युवकः कश्चन आसीत् । बाल्ये एव तदीयौ मातापितरौ दिवङ्गतौ । अतः सः अधिकम् अध्ययनं कर्तुं न शक्तवान् । तथापि पञ्चाङ्गं दृष्ट्वा विवाह-प्रयाणादिमुहूर्तान् ज्ञातुं सः शक्नोति स्म । शिष्याणां गृहं गत्वा पौरोहित्यं कुर्वन्, गृहम् आगतान् मुहूर्तादिकं च वदन् सः सामान्यं जीवनं यापयति स्म ।

आ बाल्यात् कवितारचनायाः गानस्य च अभ्यासः आसीत् तस्य । यदा विरामः भवति तदा सः ग्रामसभायाः पुरतः उपविश्य स्वकविताः मन्दस्वरेण गायन् सन्तोषम् अनुभवति स्म । यदा पण्डिताः मिलन्ति तदा सः तेभ्यः छन्दसाम्, अलङ्काराणां, रीति-गुणादीनां च विवरणं जानाति स्म । अतः तदीयाः रचनाः श्रोतृषु प्रभावं जनयितुं समर्थाः आसन् ।

कदाचित् तस्मिन् ग्रामे वसतिं कृतवान् कश्चन कविः चक्रपाणिम् अवदत् – ''भवान् उत्तमः कविः यथा तथा उत्तमः गायकः अपि । यावत् आश्रयः न प्राप्यते तावत् कवि-प्रतिभायाः प्रसारः विकासः वा न भवति । अतः भवता राजाश्रयं प्राप्तुं प्रयत्नः करणीयः । राजाश्रयः सकृत् प्राप्तः चेत् भवतः जीवनं सुखमयं भविष्यति । जनानां सम्मानः भवता प्राप्यते । भवदीया काव्य-प्रतिभा विशेषतः विकसिता भविष्यति अपि'' इति ।

एतत् श्रुत्वा नितरां प्रभावितः चक्रपाणिः अनन्तरदिने एव राजाश्रयप्राप्त्यर्थं राजधानीं प्रति प्रस्थितवान् । राजधानीप्राप्तितः पूर्वम् एव सन्ध्याकालः प्राप्तः । अतः सः कञ्चित् ग्रामं प्राप्य वासार्थं धर्मशालायाः अन्वेषणम् आरब्धवान् । एवम् अन्वेषणसमये सः गृहस्य पुरतः उपविष्टवन्तम् एकं मध्यवयस्कं पृष्टवान् – ''अत्र धर्मशाला काऽपि किं लभ्येत वासार्थम् ?'' इति ।

सः चक्रपाणेः वेषभूषादिकं दृष्ट्वा अवदत्

- ''केशवाचार्यः इति मम नाम । अहम् अपि पुरोहितः अस्मि । अतः किं धर्मशालान्वेषणेन ? अद्य रात्रौ मम गृहे एव वसतु भवान् । तेन अस्माकं सन्तोषः एव'' इति ।



चक्रपाणिः एतं प्रस्तावं ससन्तोषम् अङ्गीकृतवान् । केशवाचार्यः तम् अन्तः नीत्वा वृद्धपितुः परिचयं कारितवान् । चक्रपाणेः कुलगोत्रादिकं ज्ञात्वा सः वृद्धः - ''भवान् अस्माकं दूरबन्धुः एव । अतः भवान् कानिचन दिनानि अत्रैव वसतु नाम । अस्माभिः सह सञ्चरन् पौरोहित्यादिकं कृत्वा धनम् अनुभवं च सम्पादयतु । अनन्तरं राजाश्रयसम्पादनार्थं राजधानीं गच्छतु'' इति उक्तवान् ।

तावता केशवाचार्यस्य पुत्री स्वातिः आगत्य अवदत् - ''तात ! अन्नादिकं परिविष्टम् अस्ति । पिता भवन्तौ भोजनार्थम् आह्वयति'' इति ।

वृद्धः स्वात्यै चक्रपाणेः परिचयम् उक्त्वा - ''एषः आस्थानकवित्वं प्राप्तुं राजसमीपं गन्तुम् इच्छति'' इति ।

तदा स्वातिः हसन्ती उक्तवती - ''राजास्थाने एतावता एव त्रयः कवयः सन्ति । एकः सायङ्कालीनः कविः । अपरः दिनसम्बन्धी कविः । अन्यः रात्रिसम्बन्धी कविः । अयं चक्रपाणिः कस्य कालस्य सम्बन्धी ?'' इति ।

चक्रपाणिः झटिति एतस्य गूढप्रश्नस्य आशयम् अवगच्छन् गूढशैल्या उत्तरम् अवदत् - ''मया आदौ ते त्रयः द्रष्टव्याः । अनन्तरं यदि ते त्रयः अनुमन्यन्ते तर्हि अहं वर्तमानकालस्य कविः भवितुम् इच्छामि'' इति ।

चक्रपाणि-स्वात्योः गूढसम्भाषणं गूढचरद्वारा राजा अपि ज्ञातवान् । राजा शत्रजनानाम् अभिज्ञानार्थं देशे सर्वत्र गूढचरान् नियोजितवान् आसीत् । ते देशस्य सर्वेभ्यः कोणेभ्यः विविधाः वार्ताः आनयन्ति स्म । तादृशगूढचराणां द्वारा तयोः सम्भाषणं यथास्थितं ज्ञातवान् राजा । तयोः सम्भाषणस्य तात्पर्यं तेन न अवगतम् । सः आस्थानस्य त्रीन् अपि कवीन् एतद्विषये पृष्टवान् ।

ते क्रोधेन उक्तवन्तः - ''महाराज ! तौ एतस्मिन् सम्भाषणे अस्माकं विषये अपमानजनकं शब्दं प्रयुक्तवन्तौ स्तः । दिनस्य कविः

नाम द्यूतकारः इत्यर्थः । रात्रिकविः नाम व्यभिचारी इत्यर्थः । सायङ्कालकविः नाम चोरः इति तात्पर्यम् । अस्मद्विषये एतादृशशब्दस्य प्रयोगः निश्चयेन अपमानकरः खलु ?'' इति ।

राजा अनन्तरदिने चक्रपाणिं स्वातिं च आस्थानम् आनाय्य - ''भवद्भ्याम् अस्माकं कवीनां विषये मिथ्यारोपः कृतः । स च आरोपः यदि सप्रमाणं न दृढीक्रियते तर्हि भवतोः कठोरदण्डनं भविष्यति'' इति अवदत् ।

चक्रपाणिः स्वातिः च पूर्वम् एव निश्चितवन्तौ आस्तां यत् राज्ञे कीदृशम् उत्तरं दातव्यम् इति । अतः चक्रपाणिः राजानं विनयेन प्रणम्य अवदत् - ''महाराज ! दिनकविः इत्यस्य अर्थः यस्मिन् द्यूतप्रसङ्गः प्राधान्येन अस्ति तस्य महाभारतस्य कविः इति । सीताहरणगाथायां, तन्नाम रामायणकथायां, यः निपुणः सः सायङ्कालीनकविः । संयोगवियोगादिशृङ्गारकथाभिः युक्तायां श्रीकृष्णकथायां, तन्नाम भागवतकथायां, यः निपुणः सः रात्रिकविः इति उच्यते । एवम् एते त्रयः अपि एकैकस्य महाग्रन्थस्य विषये अपारज्ञानवन्तः । यदि एते मम योग्यताम् अङ्गीकुर्युः तर्हि एव मम पण्डितत्वं प्रमाणीकृतं भवति, ततः राजाश्रयः अपि मया प्राप्येत । अयम् एव अंशः मम स्वात्याः च वार्तालापस्य विषयः आसीत्'' इति ।

चक्रपाणेः विवरणं श्रुत्वा त्रयः अपि कवयः नितरां सन्तुष्टाः । ते उक्तवन्तः - ''भवतोः वार्तालापस्य तात्पर्यम् अवगच्छन्तः अपि वयं तस्य अन्यम् एव अर्थं निरूपितवन्तः । 'गूढार्थोपेतस्य सम्भाषणस्य तात्पर्यं भवन्मुखतः एव निर्गच्छतु, तत् राजा शृणोतु, भवन्तं च सः प्रत्यक्षं पश्यतु, ततः भवतः योग्यता निरूपिता भवतु' इति अस्माकम् आशयः आसीत्'' इति ।

राजा चक्रपाणिं यथोचितं सत्कृत्य आस्थानकविपदे नियुक्तवान् । अल्पे एव काले चक्रपाणि-स्वात्योः विवाहः प्रवृत्तः । चक्रपाणिः सुन्दराणि काव्यानि रचयंन् कालान्तरे महाकवित्वेन विख्यातः अभवत् ।





# मितव्ययस्य रहस्यम्

गणेशः गङ्गाधरश्च आत्मीयौ सुहृदौ । आ बाल्यात् तयोः महती मैत्री । यदा तौ तरुणौ जातौ तदा उदरपोषणार्थम् उद्योगस्य अन्वेषणम् आरब्धवन्तौ । तत्समये तद्ग्रामपरिसरे महान् क्षामः आसीत् । अतः तौ निश्चितवन्तौ यत् समृद्धं पूर्वतटीयं कञ्चित् देशं गत्वा उद्योगान्वेषणं करणीयम् इति ।

''मित्र ! मनुष्यस्य उदरपोषणार्थं कियत् अन्नम् आवश्यकम् ? अल्पं खलु ? यदि यावत् आवश्यकं तावत् एव व्ययं कुर्वन्तः परिश्रमेण कार्यं कुर्याम तर्हि प्रतिमासं किञ्चित् धनं सञ्चितं भवेत् एव । तत् एव मूलधनत्वेन उपयुज्य वाणिज्यम् आरब्धं चेत् जीवनं सुखमयं भवेत्'' इति अवदत् गङ्गाधरः ।

''भवतु नाम । आवां मितव्ययेन जीवनं यापयाव'' इति अङ्गीकारं सूचितवान् गणेशः ।

ततः उभौ अपि गृहात् निर्गतवन्तौ । केषाञ्चित् दिनानाम् अनन्तरं ताभ्यां पूर्वतटीयः कश्चन देशः प्राप्तः । स च देशः सुसमृद्धः आसीत् । अतः तयोः महान् सन्तोषः जातः ।

उभौ अपि नगरं प्राप्तवन्तौ । नगरे वाणिज्यादिव्यवहारः उत्तमः आसीत् । तौ निर्णीतवन्तौ - 'आवां पृथक् पृथक् गत्वा कार्यं कृत्वा स्वस्य भाग्यस्य परीक्षां करवाव । स्वावलम्बिता एव श्रेयसे' इति । एतस्य अनुगुणं तौ पृथग्भूय निर्गतवन्तौ ।

गणेशः कांश्चन मासान् श्रद्धया कार्यं कुर्वन् धनं सम्पादितवान् । 'मितव्ययजीवनं करणीयम्' इति यः सङ्कल्पः आसीत् तदनुगुणम् एव सः प्रतिदिनम् अन्नं शुष्कान् मीनान् च खादन् दिनानि यापयति स्म ।

एकदा गणेशस्य मनसि विचारः आगतः - 'मितव्ययः करणीयः इति सिद्धान्तः रमणीयः एव । किन्तु एतदर्थं कति दिनानि एवं नीरसं भोजनं कर्तुं शक्येत ? कदाचित् वा कुक्कुटमांसादिकं खादनीयम् एव' इति । अतः एकदा सः कुक्कुटं क्रीत्वा पक्त्वा खादितवान् । ततः महती तृप्तिः प्राप्ता तेन । सः निर्णीतवान् - 'यदि तृप्तिकरं भोजनं जीवने न भवेत् तर्हि मितव्ययेन किं वा साधितं स्यात् ?' इति । अतः सः प्रतिदिनं कुक्कुट-मांसस्य खादनम् आरब्धवान् ।

कदाचित् तस्य मनसि भावना आगता -

'भामहः'



'अहं मितव्ययनियमं भञ्जितवान् अस्मि' इति । अतः सः पुनरपि अन्न-शुष्कमीनयोः खादनम् आरब्धवान् । किन्तु प्रतिदिनं कुक्कुटमांसस्य स्मरणं भवति स्म तस्य ।

अन्ते सः कुक्कुटमांसखादनलोभं जेतुम् अशक्नुवन् उत्तमभोजनसेवनम् आरब्धवान् । भोजनानन्तरं देहालस्यकारणतः निद्रा प्राप्यते स्म । ततः आलस्यं प्रवृद्धम् । अतः प्रतिदिनं परिश्रमकरणे उत्साहः न दृश्यते स्म । एवम् अल्पे एव काले सञ्चितं धनं सर्वं व्ययीकृतवान् सः । परिश्रमस्य अभावात् आयः न भवति स्म । अतः प्रतिदिनं सामान्यभोजनार्थम् अपि तेन कष्टम् अनुभोक्तव्यम् आपतितम् ।

गङ्गाधरः तु मितव्ययनियमं श्रद्धया कुर्वन् धनं सम्पादितवान् । तत् धनं मूलधनत्वेन विनियुज्य वाणिज्यम् आरब्धवान् । श्रद्धा-परिश्रम-कौशलादीनां कारणतः तदीयं वाणिज्यं प्रवृद्धम् । सः भूमिं क्रीत्वा कृषिम् अपि आरब्धवान् । ततः अपि आयः प्रवृद्धः । उत्तमं गृहं क्रीत्वा काञ्चित् योग्यां कन्यां परिणीय तृप्तिकरं जीवनं यापितवान् सः ।

कदाचित् गणेशः ज्ञातवान् यत् अहम् इव रिक्तहस्ततया नगरम् आगतः गङ्गाधरः इदानीं सुखमयं जीवनं यापयन् अस्ति इति । अतः सः साहाय्यं प्राप्तुम् इच्छन् गङ्गाधरस्य गृहम् अन्विष्य गतवान् । गङ्गाधरं दृष्ट्वा सः अवदत् - ''भाग्यं माम् अवञ्चयत् । अतः अहं धनं सम्पादयितुं न शक्तः । प्रतिदिनम् अन्न-शुष्कमीनादिकं प्राप्तुम् अपि न शक्नोमि अहम्'' इति ।

''मित्र ! अलं खेदेन । भवता प्रतिदिनम् अन्नं शुष्कमीनाः च यथा प्राप्येरन् तथा व्यवस्थाम् अहं करिष्यामि । स्वावलम्बी भवतु भवान् यावच्छीघ्रम्'' इति उक्त्वा गङ्गाधरः गणेशाय स्वगृहपरिसरे एव कुटीरं निर्माप्य वासार्थं व्यवस्थां कल्पितवान् ।

प्रतिदिनं तस्य गृहं प्रति अन्नं शुष्कमीनान् च प्रेषयितुम् उद्युक्तः सः ।

कानिचन दिनानि अतीतानि । गङ्गाधरः गणेशम् आहूय अवदत् - ''मित्र ! प्रतिदिनं शुष्कमीनानां खादनतः नीरसता अनुभूयमाना स्यात् भवता । अतः अस्माकं वाटिकायां स्थितं लघुतिन्त्रिणीवृक्षं भवते दास्यामि । तस्य पर्णानि प्रतिदिनं पाके योजयतु । तेन पाकः रुचिकरः स्यात्'' इति ।

गणेशः तदनुगुणम् एव एकं लघुतिन्त्रिणी-वृक्षं स्वकीयं कृत्वा तस्य पर्णतः पाकम् आरब्धवान् । तेन पाके रुचिः प्रवृद्धा । किन्तु अल्पे एव काले स च वृक्षः पर्णहीनः जातः ।

तदा गणेशः गङ्गाधरसमीपं गत्वा अवदत् - ''भवता दत्ते तिन्त्रिणीवृक्षे इदानीं पर्णानि न सन्ति । भवतः वाटिकायां तिन्त्रिणीवृक्षाः सन्ति बहवः । किम् अहम् अन्यस्मात् वृक्षात् पर्णानि स्वीकरवाणि ?'' इति ।

''अस्तु । अद्य आरभ्य भवान् एकस्मात् महावृक्षात् पर्णानि स्वीकरोतु'' इति ।

पुनः कानिचन दिनानि अतीतानि । गङ्गाधरः गणेशम् आहूय अपृच्छत् - ''यस्मात् वृक्षात् भवान् पर्णानि अवचिनोति सः एतावता पर्णरहितः तु न खलु ?'' इति ।

''मित्र ! सः कथं पर्णरहितः भवेत् ? दिने एकवारम् एकस्मिन् भागे कानिचन पर्णानि अवचिनोमि अहम् । सप्ताहाभ्यन्तरे तत्र नूतनपर्णानि उत्पद्यन्ते । अतः पर्णराहित्यं सर्वथा न भवति तस्मिन् वृक्षे'' इति अवदत् गणेशः ।

तदा गङ्गाधरः अवदत् - ''मित्र ! मम भवतः च कार्ये अन्तरम् एतत् एव । यदा भवतः आयः अल्पः आसीत् तदा एव भवान् व्ययम् आरब्धवान् । ततः लघुतिन्त्रिणीवृक्षस्य पर्णानि इव भवतः धनं समाप्तम् । अहं धनं वर्धितवान् । अनन्तरं मया व्ययः आरब्धः । अतः प्रतिदिनं व्यये कृते अपि महातिन्त्रिणीवृक्षे पर्णानि इव मम कोषे धनाभावः कदापि न दृश्यते'' इति ।

''मित्र ! योग्यः पाठः बोधितः भवता । अद्य एव अहं भवतः सम्पादनस्य अवलम्बनं परित्यजामि । स्वावलम्बी सन् जीवन् धनं प्रभूतं सङ्गृह्य एव व्ययस्य आरम्भं करिष्यामि'' इति वदन् गणेशः तस्मिन् एव दिने दृढसङ्कल्पं कृतवान् यत् गङ्गाधरेण सूचितं मार्गम् एव अनुसरिष्यामि इति।



# राजा अपि विनम्रः स्यात्

चित्रम् - शङ्कर ली




राजप्रासादं प्रत्यागतस्य राज्ञः मनसि दुरभिमानः उत्पन्नः ।
यथा मुनिः मम योग्यतां ज्ञातवान् तथा प्रजाः अपि जानन्तु नाम ।
राजा भोजोत्सवं व्यवस्थापयितुम् इच्छन् पर्यवेक्षकम् आहूतवान् ।
भोजोत्सवस्य व्यवस्था भवतु । कारवेल्लस्य व्यञ्जनं कारयतु । निम्बपत्रस्य क्वथितं भवतु ।
यथाज्ञापयति महाराजः ।
अतिथयः परिवारजनाश्च राज्ञः भोजनारम्भं प्रतीक्षन्ते ।
हन्त ! एतत् तु नितरां तिक्तम् ।
राजा स्वस्य निराशां गोपयितुं प्रयत्नं करोति पर्यवेक्षकम् आहूय किमपि वदति सः ।
एतानि सर्वाणि नयतु । सामान्यभोज्यानि आनयतु ।
अतिथीनां निर्गमनस्य अनन्तरं राजा अरण्यं गत्वा मुनिं भोजोत्सवस्य अनुभवम् अवदत् ।
कारवेल्लं निम्बं च आश्रमे मधुरम् आसीत् । प्रासादे च तिक्तम् ।
राजन् ! यदा अत्र आगतं तदा भवति नम्रता आसीत् । मम प्रशंसायाः श्रवणात् भवति मिथ्याभिमानः उत्पन्नः । विनम्रता च नष्टा । अतः सर्वाणि-वस्तूनि तिक्तताम् अदर्शयन् ।
राजा लज्जितः जातः । राजा अपि विनम्रः स्यात् इति अवगतं तेन ।

# चन्दमामा

## स्वपरम्परा अभिज्ञायताम्

एतस्मिन् अङ्के प्रकाशितायाः प्रश्नावल्याः उत्तरम् अग्रिमे अङ्के प्रकाशयिष्यते । तदभ्यन्तरे एतेषाम् उत्तरं स्वयं ज्ञात्वा भारतस्य प्राचीनपरम्पराम् अवगत्य ज्ञानं सुसमृद्धं क्रियताम् ।

### 1



१. प्राचीनभारतसाहित्यस्य कां कृतिं वयं प्रथमकथाग्रन्थत्वेन परिगणयितुं शक्नुयाम ?

२. प्राचीनभारतीयसाहित्यस्य का कृतिः ऋषिभ्यां मिलित्वा रचिता ?

३. का कृतिः भारतीय-ऐतिहासिकरूपकक्षेत्रस्य प्रथम-कृतित्वेन परिगणिता अस्ति ?

४. कालिदासस्य अनन्तरं कः रूपककारः प्रसिद्धः आसीत् ? तस्य कृतयः काः ?

### 2

कश्चन राजकुमारः सिंहासनाधिष्ठितेन अग्रजेन प्रेषितेन अश्वेन सह सञ्चरन् आसीत् । यदि स च अश्वः केनापि अवरुद्धः न भवेत् तर्हि तस्य अग्रजः सम्राट् भवेत् । किन्तु कश्चन तरुणः तम् अश्वं धैर्येण बद्धवान् । घोरं युद्धं प्रवृत्तम् । तस्मिन् युद्धे राजकुमारः मृतः । किन्तु काचित् स्त्री तम् उज्जीवितवती । अनन्तरकाले राज-कुमारेण ज्ञातं यत् युद्धं कृत-वान् तरुणः न अन्यः, अपि तु मम पुत्रः एव इति । सः राजकुमारः कः ? युवकश्च कः ? सा स्त्री का ?



# एतन्मासे जातः महापुरुषः

'श्री अरविन्दः १८७२ तमे वर्षे अगस्त्मासस्य १५ दिनाङ्के कलकत्तानगरे जातः । तस्य पिता डा० के. डि. घोष्, माता च स्वर्णलता देवी । बाल्ये एव सः डार्जिलिङ्ग्नगरे विद्यमानम् ऐरिष् कान्वेण्ट् प्रति प्रेषितः । ततः १८७९ तमे वर्षे इङ्ग्लेणड् प्रति अपि । एतस्य कारणं तु सः भारतीयसंस्कृतेः प्रभावात् सम्पूर्णतः दूरे भवेत् इत्येव ।

श्री अरविन्दः लण्डन्नगरे सेण्ट्पाल्स्शालायां पठितवान् । तत्र शालायाः प्रमुखाः सर्वे पुरस्काराः अपि एतेन प्राप्ताः । ततः सः लब्धछात्रवृत्तिः सन् केम्ब्रिड्ज्नगरीयं किङ्ग्स्महाविद्यालयं प्रविष्टवान् । तत्र सर्वासु परीक्षासु अपि अत्युत्तमफलं प्राप्तवान् । तथैव 'इण्डियन् सिविल् सर्विस्' परीक्षा अपि तेन सम्मुखीकृता । किन्तु तम् अवलम्ब्य उद्योगः करणीयः इति तस्य सङ्कल्पः न आसीत् । अतः एव सः अश्वचालनपरीक्षायां भागं न गृहीतवान् । लण्डन्नगरं गतः बरोडासंस्थानस्य महाराजः श्री सय्याजीराव् गायक्वाडः स्वस्य सर्वकारे अरविन्दाय एकस्य स्थानस्य कल्पने आसक्तिं प्रदर्शितवान् । श्री अरविन्दः १८६३ तमे वर्षे भारतं प्रत्यागतवान् । बरोडाप्रदेशे स्थिते महाराजमहाविद्यालये आङ्ग्लफ्रेञ्च् भाषयोः प्राध्यापकरूपेण सः नियुक्तः अभवत् ।



श्री अरविन्दः

अग्रिमेषु केषुचित् वर्षेषु एव अन्यभारतीयभाषासु इव संस्कृते अपि सः प्रभुत्वं सम्पादितवान् । सः ग्रीक्, ल्याटिन् इत्यादिषु भाषासु प्रभुत्वं सम्पादितवान् आसीत् एव । सः भारतीयशास्त्र-साहित्यानाम् अध्ययनं कृतवान्, योगाभ्यासम् अपि आरब्धवान् । एतस्मिन् एव काले सः गुप्तरूपेण अन्यैः अनुयायिभिः सह ब्रिटिश्शासनस्य विरोधितया॰सङ्ग्रामं कर्तुं विभिन्नस्थलेषु युवकानां कृते शिक्षणं ददाति स्म अपि ।

१९०६ तमे वर्षे सः बरोडातः कलकत्तां गतवान् । कानिचन दिनानि यावत् सः राष्ट्रभक्तैः स्थापिते प्रथम-राष्ट्रियविद्यालये प्राचार्यत्वेन कार्यं कृतवान् । परन्तु अचिरात् सः राष्ट्रियविचारप्रचोदिकायाः ''वन्दे मातरम्'' पत्रिकायाः सम्पादनकार्ये व्यग्रः जातः ।

१९०७ तमे वर्षे भारतीयराष्ट्रियकाङ्ग्रेस् - अधिवेशनं सूरत्नगरे प्राचलत् । तत्र श्री अरविन्दः, श्री बालगङ्गाधर तिलक् महोदयः च तेभ्यः विनूतनदृष्टिं दर्शितवन्तौ । भारतस्य समग्रस्वतन्त्राय प्रतिपादनं कृतवत्सु श्री अरविन्दः एव प्रथमः ।

१९०८ वर्षे प्रसिद्धे आलिपोर्कान्स्पिरेसि-व्यवहारे श्री अरविन्दः कारागृहं प्रति प्रेषितः । सः लघु-प्रकोष्ठे एकवर्षं यावत् स्थापितः । तेषु एव दिनेषु सः अत्यपूर्वान् च आध्यात्मिकानुभवान् प्राप्तवान् । सः कारागारात् मुक्तः जातः । परन्तु अधिकारिणः तं पुनः बन्द्धुम्, अन्यदेशं प्रति प्रेषयितुं च प्रयत्नं कृतवन्तः । तदा श्री अरविन्दः गुप्तरूपेण फ्रेञ्चसर्वकाराधीनां पाण्डिचेरिप्रदेशं प्रविष्ठवान् ।

ततः तस्य जीवनस्य नूतनः अध्यायः आरब्धः । योगविषये तद्वारा जीवनदर्शनविषये च सः आत्मानं सम्पूर्णतया प्रावर्तयत् । 'विकासपथे मानवः अन्तिमः न । सः इतोऽपि उन्नतं स्तरं प्राप्तुं शक्नोति । तत्र सः मनसा न, तदधिकतया प्रज्ञया व्यवहरति । सा स्थितिः 'अतिमानवप्रज्ञादशा इति वक्तुं शक्या' इति अरविन्दवर्यः अभिप्रैति ।

श्री अरविन्दस्य जन्मदिने एव भारतदेशः अपि स्वातन्त्र्यं प्राप्तवान् ।

एषु दिनेषु जगति सर्वत्र मानवभविष्यम् अधिकृत्य अरविन्दवर्येण प्रकाशिते दृष्टिविशेषे महती आसक्तिः दृश्यते ।



# भारतम् पूर्वम् इदानीं च

## श्रीनगरम्

### सुन्दरं प्रसन्नं च नगरम्

श्रीनगरं जम्मूकाश्मीरराज्यस्य राजधानी । 'श्रीः' इत्येतस्य सम्पत्तिः, शोभा, सौभाग्यं, प्रसन्नता इत्यादयः अनेके अर्थाः । श्रीनगरं तान् सर्वान् अर्थान् अपि द्योतयति । एतत् द्योतनं न नाममात्रेण, अपि तु वस्तुतः अपि । तादृशः विशेषानुग्रहः श्रीनगरे प्रकृत्याः ! समुंद्रतलात् १७६८ मीटर्-उन्नते स्थले स्थितं श्रीनगरं 'दल'सरोवरेण, असङ्ख्यैः उद्यानैः च शोभते । झेलम्नदी एतां शोभां विभूषयति ।

काश्मीरविषये ऐतिह्यम् एवं श्रूयते - ''पूर्वं स च प्रदेशः जलमयः आसीत् । तत्र जलोद्भवः नाम राक्षसः निवसति स्म । जलम् एव दुर्गं तस्य । तत्र वसन् सः हठात् आक्रमणेन परितः स्थितान् प्रदेशान् लुण्ठयित्वा नाशयित्वा च जलं शरणं गच्छति स्म । यावत् सः जले तिष्ठति तावत् तं कोऽपि संहर्तुं न अर्हति स्म । तादृशः विशेषवरः प्राप्तः आसीत् तेन । महर्षिः कश्यपः राक्षसस्य एतत् रहस्यं ज्ञातवान् । सः विशेष-शक्तियुक्तस्य हलस्य साहाय्येन जलाशयस्य जलसङ्ग्रहं निवारितवान् । यदा तत्र जलं न स्थितं तदा राक्षसः शक्तिहीनः सन् मरणं प्राप्तवान्'' इति ।

ऐतिहासिकग्रन्थत्वेन प्रसिद्धा कल्हण-विरचिता 'राजतरङ्गिणी' वदति यत् श्रीनगरं सम्राजा अशोकेन प्रतिष्ठापितम् इति । एतत् प्रतिष्ठापनीयम् इति तस्मै प्रेरणां दत्तवती तदीया पुत्री चारुमती । कदाचित् पित्रा सह एतत् स्थलम् आगता सा दलसरोवरस्य सौन्दर्यं दृष्ट्वा साभिलाषम् उक्तवती - 'अहो ! ध्यानार्थं सुयोग्यं स्थलम् एतत् !' इति । एतेन स्फूर्तिं प्राप्य अशोकः अत्र एकं बौद्धविहारं निर्मापितवान् । गच्छता कालेन विहारं परितः नगरं प्रवृद्धम् ।

'श्रीनगरम्' इत्येतत् नाम केन कृतम् इति तु न ज्ञायते । स्थलपुराणं ज्ञापयति यत् एतस्य नगरस्य पुरातनं नाम सूर्यनगरम् इति आसीत् इति ।

१९४७ तमे वर्षे भारतं यदा स्वतन्त्रं जातं तदा जम्मूकाश्मीरराजः सूचितः यत् भवद्देशः पाकिस्थाने अन्तर्भवेत् उत भारते इति निर्णयाधिकारः भवतः एव इति । यावत् सः अन्तिमनिर्णयं न कृतवान् ततः पूर्वम् एव पाकिस्थानसैन्यं पर्वतीयजनान् प्रचोद्य आक्रमणम् अकरोत् । अनन्यशरणः राजा भारतस्य अङ्गताम् अङ्गीकृतवान् । भारतीयसैन्येन पाकिस्थानीयाः आक्रामकाः यथायोग्यं दण्डिताः । तत्काले लडाकजनपदस्य भूयान् भागः पाकिस्थानाधीनत्वेन स्थितः अभवत् । संयुक्तराष्ट्रसङ्घेन मध्ये प्रविश्य युद्धस्थगनादेशः दत्तः यत्, विभाजनरेखा लेखनीया इति अभ्यर्थितं यत् तस्य फलम् एव एतत् ।

काश्मीरस्य शान्तेः भङ्गार्थं पाकिस्थानेन निरन्तरप्रयत्नाः क्रियमाणाः सन्ति इति तु जगत् एव जानाति । भयोत्पादकानां प्रोत्साहनेन, भाटक-सैनिकान् वाममार्गेण काश्मीरं प्रति प्रेषणेन च पाकिस्थानं भारतस्य सहनां परीक्षते । भीत्या, अगतिकगत्या वा न ज्ञायते, पाकिस्थानस्य उग्रवादिप्रोत्साहनप्रवृत्तौ ह्रासः दृश्यते एषु दिनेषु ।

काश्मीरे दर्शनीयानि स्थलानि सन्ति अनेकानि । चरिष्मासाही, निशात् बाग्, शालिमार् बाग् इत्यादीनि उद्यानानि, हरिपर्वत-शङ्करपर्वतादीनि च तेषु अन्यतमानि । शङ्कर-पर्वतशिखरे शङ्कराचार्यः, श्री अरविन्दवर्यः च ध्यानं कृतवन्तौ इति श्रूयते । अत्रत्ये हजरत्बाल्-मन्दिरे प्रवादिनः महम्मदस्य पवित्रः केशः रक्षितः अस्ति । वसतिगृहैः, नौकागृहैः, अन्यैः आनुकूल्यैः च उपेतम् आधुनिकं श्रीनगरं सदापि यात्रिणः स्वागतीकरोति । प्रवासोद्यमः एव एतस्य नगरस्य आयमूलम् । एतत्परिसरे अनेकाः शैक्षणिकसंस्थाः अपि विराजन्ते । जम्मूकाश्मीर-विश्वविद्यालयः, काश्मीरविश्वविद्यालयः, शेर्-ए-काश्मीर-स्मारक-कृषिविज्ञान-तन्त्रज्ञान-विश्वविद्यालयः इत्यादयः, अन्ये बहवः महा-



*प्लवमानस्य सरोवरस्य एकं प्राचीनं चित्रम् ।*
*प्रथमपृष्ठे दलसरोवरस्य दृश्यम् ।*

विद्यालयाः, अनेकानि विद्यासंस्थानानि च अत्र विराजन्ते ।

अत्रत्यं हस्तोद्यमकौशलम् अपि जगत्प्रसिद्धम् एव । मृदुवस्त्रकटनिर्माणे, ऊर्णवस्त्रनिर्माणे, राङ्कवसज्जीकरणे, काष्ठशिल्पे च तत्रत्यानां कौशलम् अत्यपूर्वम् । अत्र प्राप्यमाणाः पुष्पकेसराः, सुगन्धद्रव्यं च पाके, सुगन्धद्रव्य-निर्माणे, औषधनिर्माणे च विशेषतः उपयुज्यन्ते ।

# सर्जनात्मिका स्पर्धा

*यदि सस्यमेव न अवनमति तर्हि वृक्षरूपेण वर्धनानन्तरं अवनमयितुं शक्येत किम् ?*

## दुरभ्यासः

लक्ष्मीपुरग्रामे रामः इति कश्चन कृषिकः आसीत् । सः बहु मितव्ययी । बालाः भोजनसमये स्थालिकायाम् आहारं त्यजन्ति चेत् सः तान् ताडयति निन्दयति च । अपि च घण्टां यावत् तान् बोधयति स्म अन्नस्य विषये । तथैव पत्नीं सीताम् अपि वदति यत् बालेभ्यः अधिकं मा परिवेषयतु इति । किन्तु तस्याः अभिप्राये पतिः महान् कृपणः । सा बालान् एव प्रोत्साहयन्ती पतिम् वदति यत् - ''वयं किं दरिद्राः ? एकैकस्य पुलाकस्य अपि गणनां कर्तुम् । अन्नं सुवर्णं तु न यतः किञ्चिदपि व्यर्थं न भवेत् इति वक्तुम्'' इति ।

किन्तु रामस्य अभिप्रायः तु 'यः मितव्ययं करोति, किमपि वस्तु व्यर्थं न करोति, सः एव बुद्धिमान्' इति । पत्निपुत्राणाम् अभ्यासं समीकर्तुं सः एकम् उपायम् अकरोत् ।

सः एकस्मिन् गुरुवासरे पत्नीम् आहूय उक्तवान् - ''श्वः वयं अन्नपूर्णेश्वरी मन्दिरं गच्छामः । नेतुम् उपाहारं सज्जीकरोतु । देव्याः दर्शनानन्तरं तत्रैव उपाहारं स्वीकृत्य प्रत्यागच्छामः'' इति । सीता पत्युः वचनेन सन्तुष्टा । परेद्यवि प्रातः एव मधुरं तथा भक्ष्यं द्वयमपि कृत्वा पत्युः हस्ते दत्तवती । सर्वे मन्दिरं गतवन्तः ।

अन्नपूर्णेश्वरीदेवीमन्दिरं पर्वतस्य उपरि आसीत् इति कारणतः सीता तत्र तत्र उपविश्य सावधानेन मन्दिरं प्राप्तवती । बालाः, पतिः च धावन्तः शीघ्रमेव आरोहणं कृतवन्तः । शुक्रवासरः इति कारणतः महान् सम्मर्दः आसीत् । अतः दर्शनार्थमेव महान् समयः अतीतः ।

दर्शनं समाप्य आगमनसमये सीता तथा बालाश्च श्रान्ताः बुभुक्षिताः च । चलितुमपि ते न शक्ताः । अतः मार्गे कस्यचित् तटाकस्य समीपे सीता अवदत् - ''अत्र किञ्चित् उपविश्य उपाहारं स्वीकुर्मः । बालाः बुभुक्षिताः श्रान्ताः च । स्यूततः उपाहारपात्रं निष्कासयतु'' इति । रामः स्यूते हस्तम् आलोडयन् अवदत् - ''अहो ! सर्वं नष्टम् । पूजोपकरणं यत्र वयं स्वीकृतवन्तः तत्रैव तत्पात्रं स्थापितम् इति मन्ये । इदानीं वयं बुभुक्षिताः एव गृहं प्रति गच्छामः'' इति ।

सीता क्रोधेन पतिं निन्दन्ती श्रान्ता, बुभुक्षया पीडिता च गृहम् आगतवती । शीघ्रं बालेभ्यः किमपि कृत्वा दातव्यमिति पाकशालां पविष्टवती । 'पाककरणम् अनन्तरं भवतु । इदानीं बुभुक्षिता अस्ति । किमपि खादतु । बालान् अपि आह्वयतु' इति वदन् रामः स्यूततः उपाहारपात्रं निष्कासितवान् ।

सीता आहारस्य पात्रं दृष्ट्वा आश्चर्यचकिता, खिन्ना च । खेदेन पतिम् उक्तवती - ''कीदृशं कठिनं हृदयं भवतः ? बालान् उद्देशपूर्वकम् एव पीडितवान्'' इति । रामः तया उक्तं सर्वं मौनेन श्रुतवान् । बालाः उपाहारं यदा समापितवन्तः तदा रामः पत्नीम् उक्तवान् - ''इदानीं भवती बालानां स्थालिकाः पश्यतु । अद्य एकं पुलाकमपि ते न त्यक्तवन्तः'' इति । सीता तद् दृष्ट्वा विस्मिता तत्र एकः अपि पुलाकः न आसीत् । स्थालिकाः क्षालिताः इव आसन् ।

तदा रामः 'यथा धनस्य महत्त्वं दरिद्रः जानाति तथैव अन्नस्य महत्त्वं बुभुक्षितः एव जानाति । एतत् पाठयितुमेव मया एवं कृतम् । बालानां दुराभ्यासः बाल्ये एव दूरीकरणीयः । यदि सस्यमेव न अवनमति तर्हि वृक्षरूपेण वर्धनानन्तरं अवनमयितुं शक्येत किम् ?'' इति उक्तवान् ।

सीता तद्दिनारभ्य बालेभ्यः किञ्चित् एव परिवेषयति । बालाः पृच्छन्ति चेत् किञ्चित् किञ्चित् ददाति । अनेन बालाः आहारं व्यर्थं न कुर्वन्ति स्म, सीता अपि मितव्ययस्य महत्त्वं ज्ञातवती ।

*- अरविन्दः*


THE AMUL CHEESE BOY
IN PICNIC PANIC
One bright sunny day...
...a picnic is in progress.
Little Munnu Verma crawls away.
GURGLE
Suddenly, huge rocks come tumbling down the mountain.
RUMBLE
Amul cheese boy eats an Amul cheese slice...
...and becomes strong and powerful.
He smashes the falling rocks...
BANG
...reducing them to small pieces.
CRACK
All thanks to the cheese that has more milk in it.
Munnu is rescued and back with his family.
Amul cheese slices.
Amul cheese. Yes please!
Amul

# चित्रशीर्षिकास्पर्धा

अधस्तनचित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ? समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -



चन्दमामा
(संस्कृतम्)
'अक्षरम्'
८ उपमार्गः
गिरिनगरम्
बेङ्गलूरु-५६००८५



युक्ता शीर्षिका अगस्ट् - २० तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका द्विसहस्रतमवर्षस्य अक्टोबर्मासे प्रकाशयिष्यते ।

## अभिनन्दनानि

'जून्'स्पर्धाशीर्षिकाप्रेषकः-



*शिल्पा जयप्रकाश*
*c/o जयप्रकाश, 'श्रीनिकेतन' २७०,*
*२ - ए मुख्यमार्गः, I घट्टः,*
*गिरिनगरम्, बेङ्गलूरु - ८५*



*प्रथमचित्रम्* - पक्वं फलं सुलभ्यं, किन्तु नास्ति बुभुक्षा ।
*द्वितीयचित्रम्* - महती बुभुक्षा, किन्तु नास्ति सिद्धः पाकः ।

# Goodies for Kiddies



*Look out for details of our NEW **long-term subscription offer** in the forthcoming issues of Chandamama.*

*Watch out for great gifts and exciting offers in our* **Goodies for Kiddies** *scheme!*



